एवं न्यायसुधां समस्तमहितां व्याख्याशतैः पूरितां
सत्यध्यानयतीश्वरेण कथितां श्रीसात्विकार्यात्मजः ।।
भक्तिज्ञप्तिविरक्तितोयनिलयो ध्यायन् कृतार्थोऽभवत्
लक्ष्मीशाश्रमिवर्यपूर्वशुभदृग्शौर्यैः सतीर्थ्यैर्युतः ।। १२ ।।

यो विद्वन्मणिगणदुर्गमार्थपूर्णः श्रीद्वैतद्युमणिपदो मणिः कृतीनाम् ।।
अद्वैतान्धतमसभक्षणैकदीक्षः तं प्रादाद्बुधमणये मणिर्यतीनाम् ।। १३ ।।

समग्रं तद्ग्रन्थं गुरुवरपदाम्भोजसविधे
पठन् सम्यक् तन्वन्ननुवदनमस्यातिकठिणम् ।।
य एकः प्राकार्षीदसदृशमुदं देशिकहृदः
गुरोस्तस्मिन् प्रीतिर्न हि भवति शक्या कथयितुम् ।। १४ ।।

चातुर्यचारुतरवाग्घृतसर्वचेताः नित्यं निजाध्ययनतत्परसाधुचेताः ।।
वाक्यार्थघोरविपिने मृगराजतेजाः रेजे मठेऽखिलपटुर्गुरुराट्तनूजः ।।१५।।

अथ यतिवरशिष्यो वर्यधर्माधिकारी -
पदवरलसितोऽगाद्धीरकण्ठीरवोऽयम् ।।
तिरुपतिगतगोष्ठीं मण्डितां पण्डितेन्द्रैः
कठिणतरपरीक्षाघोरचर्चादियुक्ताम् ।। १६ ।।

मध्यस्थे वरखेडिपञ्चवदने प्रामाण्यवादाहवे
विद्वच्छेखरयज्ञविठ्ठलमुखैः पूर्णे समित्यन्तरे ।।
आयातो यशसा ततोऽत्र विबुधैस्सार्धं नियुद्ध्य प्रधीः
चक्रव्यूहचरोऽभिमन्युरिव तान् बुद्ध्यातिशिश्ये भृशम् ।। १७ ।।

---

१२ - ***लक्ष्मीशाश्रमिवर्यः*** - *कुन्दापुरमठाधिपतयः श्री लक्ष्मीशतीर्थश्रीचरणाः ।*

१७ - ***वरखेडिपञ्चवदने*** - *वरखेडिनरसिंहाचार्ये ।*

तरुणं धरणीसुरारुणार्कं बुधराजं गुरुराजसूनुराजम् ।।
भुजयोश्च वहन्ननर्त चित्रं प्रमदोद्रिक्तसुयज्ञविठ्ठलार्यः ।। १८ ।।

किमु तादृशशिष्यसंघतोऽस्य गुरुराजोऽप्युत तेन तस्य शोभा ।।
इति लौकिकलोचनोत्थितोऽयं विशयोऽभूदुभयोश्च भूषणाभः ।। १९ ।।

दिगन्तविश्रान्तबुधैश्च भव्यं विभूषितं मौनिवरेण दिव्यम् ।।
गत्वाऽथ बळ्ळारिगतं सदोऽयं गुरुं ननामात्र समस्तसेव्यम् ।। २० ।।

तत्राऽऽयासीन्न्यायशास्त्रेऽतिदक्षः विद्वद्वर्यो वेङ्कटार्याभिधानः ।।
योऽयं छात्राणां पटुः पाण्डुरङ्गीत्येवं बाल्येऽस्तावि विद्वद्वरौघैः ।।२१।।

गङ्गेशाभं नव्यतर्कद्युनद्यां वृद्धं विद्वत्तावयोभ्यां प्रसिद्धम् ।।
कर्मन्दीशो वीक्ष्य तं च प्रहृष्टस्तद्वाक्यार्थं श्रोतुकामो बभूव ।। २२ ।।

वाक्यार्थे स श्रीनिवासं समर्थं मत्वाऽऽहूय प्राह तं वेङ्कटार्यम् ।।
पश्यत्वेतन्नव्यगोराजलीलां नव्यन्यायेऽनम्यवाक्यार्थभङ्गीम् ।। २३ ।।

हेत्वाभासानां च सामान्यवादे चर्चारम्भे वेङ्कटार्यस्स्थविष्ठः ।।
वाक्यार्थं स्वं सम्प्रदायाप्तरीत्या कुर्वन्सर्वान् हर्षितानाश्चकार्षीत् ।। २४ ।।

मध्यस्थश्रीध्यानतीर्थार्यवाचा तत्र प्राप्तानेकनव्यार्थसारः ।।
तद्वाक्यार्थं स्वीयकोटिक्रमौघैः नव्यै रेजे दूषयन् ध्यानशिष्यः ।। २५ ।।

नव्यानेतत्कोटिसङ्घान् स्वभङ्ग्या वृद्धेऽप्यद्धा दूषयत्येष आशु ।।
काशीयावच्छेदकाच्छेद्यकोटिसङ्घैस्स्वीयं नव्यवादं ररक्ष ।। २६ ।।

---

१९ - सन्देहः ।

२२ - **गङ्गेशाभं** - गङ्गाधराभम् - गङ्गेशोपाध्यायनिभमित्यप्यर्थः ।

एवं वृत्ते वादयुद्धेऽथ शान्तः शिष्टश्रेष्ठस्स स्थविष्ठोऽतिहृष्टः ॥
आश्लिष्येनं भाषिणं ध्यानशिष्यं स्पष्टं कृष्टिश्रेष्ठमस्तोष्ट गोष्ठ्याम् ॥२७॥

नूनं नूत्नोऽप्येष गोराट् बलिष्ठः भाषा यस्य श्रोत्रभूषायिताऽत्र ॥
एवं ध्यानार्यान्तिके शंसितोऽयं रेजे कृष्टीनां पटुर्जालिहाळः ॥ २८ ॥

ध्यानार्यनिर्मलपदामरवर्त्मचारिश्रीसात्त्विकार्यतनयार्यनार्कभासा ॥
दीपोपमेयविदुषां भृशमाप नाशं रीढाख्यगाढतिमिरं परितोऽधरस्थम् ॥२९ ॥

पठन्नथ च पाठयन् विमलसर्वमूलं शुभं
परोक्तिमपि दूषयन् सुखमुनिं च सन्तोषयन् ॥
वसेति गुरुणोदितः क्रतुपुरं स जोषीद्विज -
मनोरथगतो ययौ गुरुकरातपत्री बुधः ॥ ३० ॥

मध्वार्योदितवर्त्मनैव सततं वस्तव्यमित्थं गुरो -
रादेशं शिरसा धरन् बुधवरः शिष्यानयं पाठयन् ॥
पित्राद्यैः सहितो वसन् क्रतुपुरे श्रीवीरनारायणं
नित्यं स्वोचितकर्मणाऽभजत सद्गार्हस्थ्यधर्मस्थितः ॥ ३१ ॥

---

*२८ - **कृष्टीनां** - विदुषां मध्य इत्यर्थः ।*

*२९ - उपेक्षाकारिणोऽपि केचिद्बुधा आचार्यं सममानयन्निति भावः ॥*

*३० - **जोषीद्विजमनोरथगतः** - गुराराजाचार्य जोषी नामकविप्रवरः क्रतुपुरे महासमाराधनावसरे कुलगुरुं श्रीसत्यध्यानतीर्थयतिवर्यं प्रणम्य "समीचीनज्ञानयज्ञेन अस्मत्पुरस्य 'क्रतुपुर' इति नाम समीचीनतां सदा सम्पद्यतामित्यतः भवद्भिरेकस्य विदुषः प्रेषणरूपानुग्रहः अस्मदाद्युद्धारार्थं क्रियतामिति" प्रार्थयत् । तदा यतिवर्येण अनेकेषु विद्वत्सु दर्शितेषु, कः वरणीय इति जोषीद्विजे सन्दिहाने सति, यतिवर्ये एकं विषयं प्रदाय "सर्वे अस्य विषयस्य उपपादनं कुर्वन्ति । यस्योपपादनेन ते मनः सम्यक् प्रसीदति तमत्र पुरुस्कुर्विति" सन्देहपरिहारमार्गं दर्शयति सति श्री आचार्यः स्वीयाद्भुतोपपादनचातुर्येण तन्मनोरथमविशदिति कथा । ततश्च गुरुवर्याज्ञया क्रतुपुर एव बहुकालमुवास श्री आचार्यः ॥*

ब्राह्मे मुहूर्ते मार्ताण्डसारथेरुदयात् पुरा ।।
कर्तव्यं कर्तुमुत्तस्थौ सूरवत् प्रतिवासरम् ।। ३२ ।।

अस्वप्नेशं स्मरन्नेषः सुस्वप्नोल्लसिताननः ।।
विधीन् विधाय विधिवद्विधुवच्छुशुभेऽनघः ।। ३३ ।।

तुलसीमृत्तिकाधूलिविलसद्धिततालिकः ।।
नत्वा मातरपितरौ कोष्ठ आसिष्ट दैवते ।। ३४ ।।

कायवाङ्मनसैः श्रीशं दशधीशमयं नमन् ।।
दध्यौ नारायणं देवं जगद्धारणकारणम् ।। ३५ ।।

समानमनुसन्धातुरमानेनाननौजसा ।।
धामाऽऽसावाच्यमोदस्य काममीक्षकमानसम् ।। ३६ ।।

भक्तिसन्तुष्टवैकुण्ठः पटुरैट्टाथ सुष्ठु सः ।।
अपारकीर्त्यकूपाररूपां गुरुपरम्पराम् ।। ३७ ।।

गीर्वाणवाणीसरणिस्तुतदेशिकसन्मणिः ।।
जगौ दासाग्रणीवाणीं धरणीपुण्यकारिणीम् ।। ३८ ।।

तम्बूरीधारिविप्रार्यः षड्जपञ्चमसुस्वरौ ।।
योजयन् वादयन् रेजे तुम्बरोऽम्बरगो यथा ।। ३९ ।।

विरागी भक्तियोगाप्तरागरञ्जितविग्रहः ।।
रागालापमथैकान्तेऽकृत श्रीकान्तगान्तरः ।। ४० ।।

---

*३३ - विधुः उषःपूर्वसमये स्वविधिं विधिवद्विधायानघो राजते हि ।*

*३९ - तुम्बरः - तुबुरुः ।।*

माध्वोक्त्याज्योज्वलज्ज्ञानदीपाद्दीपानयं सृजन् ॥
पिप्राय श्रीप्रियं दीपोत्सवेनान्तेवसत्कुले ॥ ४९ ॥

निर्वाणकारणं माध्वी धिषणैवेति शेमुषी ॥
तत्पाठेक्षोत्थितायाश्च जह्रेऽन्त्यफलतां मुदः ॥ ५० ॥

छात्रा बाला अबालाश्च शास्त्रं लघु महत्समम् ॥
श्रितास्तमम्बुधिं नानामणिप्राणिगणा इव ॥ ५१ ॥

श्रितध्यानार्यकल्पद्रुः परितश्छात्रसत्तमः ॥
सुयोगपट्टिकानिष्ठो भासा व्यास इवास सः ॥ ५२ ॥

दयया धर्मजो धर्मदीक्षया धर्मजानुजः ॥
जयेन विजयो रेजे गुरुराजतनूजनूः ॥ ५३ ॥

परुषं भाषमाणोऽयं भीषयन् द्रावयन् कलिम् ॥
धीत्विषा भूषयन् शिष्यान् तच्चितां चिन्तयन्नहन् ॥ ५४ ॥

साहित्यशाब्दमीमांसातर्कवेदान्तपञ्चकम् ॥
यत्करे करशाखाभं विद्याक्षुत्क्वाश्रितस्य तम् ॥ ५५ ॥

एष शिष्यानतिप्रौढाप्रौढग्रन्थरसायनम् ॥
लीलया पाययामास डिम्भानम्बा गुडाम्बुवत् ॥ ५६ ॥

---

*५० - पर्यायोक्तिः - आचार्यपाठवीक्षणमात्रेण आनन्दजननात् किमु पाठविषयमध्वशास्त्रज्ञानेन मोक्षानन्द इति कैमुत्येन ''निर्वाणकारणं माध्वी धिषणैवेति शेमुषी'' भवतीति भावः ॥*

*५१ - **लघुः** - बालगम्यम् । **महत्** - प्रौढगम्यम् । **समं** - एतत्सर्वम् ।*



(आ - ३१)

क्रतुपुरमागताः श्री आचार्याः

अमलाऽमूल्यमूलार्थललत्तरळमञ्जुळा ॥
व्याख्योक्तिमौक्तिकश्रेणीव्यक्तरक्तानुमामणिः ॥ ५७ ॥

नव्यदिव्यपरिष्कारमञ्जूषान्तर्निवेशिता ॥
दुरागमतमोवारहरा धीरमनोहरा ॥ ५८ ॥

सुवर्णस्वर्णरचिता कृष्णसूत्रगणाश्रिता ॥
भक्तिमूल्येति वितता वेदब्रह्मपदार्पिता ॥ ५९ ॥

तत्पाठनाभिधा लब्धा माला यैरमलान्तरैः ॥
तद्दैवमवदिष्यंश्चेन्मे सहस्रास्यता ध्रुवम् ॥ ६० ॥

विद्यावाञ्छाऽवर्धतास्य छात्रेच्छा तर्पिता यथा ॥
अव्यये धनचिन्ता हि विद्याचिन्ता व्ययेऽधिका ॥ ६१ ॥

अपीपठत्तथान्यानि तर्कशास्त्रं विशेषतः ॥
यत्तीक्ष्णधिषणाशक्तिव्यक्तिकारणमिष्यते ॥ ६२ ॥

शास्त्रशिक्षां धर्मदीक्षां दक्षां यो ददक्षताम् ॥
ररक्षान्नादिभिः शिष्यान् का धीमंस्तत्कृपोपमा ॥ ६३ ॥

आपञ्चम्याः पञ्चघण्टाः नित्यं पाठप्रपञ्चनम् ॥
पञ्चतेऽस्मिन् प्रपञ्चेशकृपाकाञ्चनसञ्चयम् ॥ ६४ ॥

---

६० - ***मे सहस्रास्यतेति*** - *"तेनानिष्टं कथं भवेत्" इत्यत्रानुव्याख्याने 'ते अनिष्टं कथं न भवे' दिति सुधायां योजनान्तरस्य दर्शनात् तद्वदत्रापि साधुतेति भावः ।*

६१ - ***धनचिन्ता*** - *धनरक्षणचिन्ता ।* ***विद्याचिन्ता*** - *विद्यासम्पादनचिन्ता ॥*

६३ - ***धीमन्*** - *हे मेधाविन् पठितः ।*

पवित्रपूर्णधीवाणीत्रिवेणीपूतधीमणिः ॥
यान् स्नानानलसः स्वांश्चाबूबुधद्धानुवद्बुधः ॥ ६५ ॥

पटुर्वेङ्कटराडिष्टपाठने दृष्टिमांस्ततः ॥
अपूपुजद्रमाजानिं जगद्राजमजं द्विजः ॥ ६६ ॥

सोऽनल्पानल्पकालेन दध्यौ माधवविग्रहान् ॥
संक्षेपविस्तराभ्यां हि चिन्तयान्ति मनीषिणः ॥ ६७ ॥

श्रीशं श्रीवेङ्कटेशानं वंशाभीष्टप्रवर्षणम् ॥
हयास्यं विठ्ठलं कृष्णं वासिष्ठं वल्गुबालकम् ॥ ६८ ॥

परं स्वोपास्यमश्वास्यं प्रशस्यं मुनिभिर्भृशम् ॥
व्यासं पापेभपञ्चास्यलास्यं पञ्चास्यमारुतिम् ॥ ६९ ॥

अन्तपद्मनाभश्रीलक्ष्मीनारायणादिकान् ॥
सालिग्रामग्रामराजद्रङ्गमङ्गलविग्रहान् ॥ ७० ॥

प्राणपक्षिफणीशादिदेवतास्तारतम्यतः ॥
जयार्यराघवेन्द्रार्यप्रभृतींश्च महायतीन् ॥ ७१ ॥

विश्वानार्चत्स विश्वार्च्यानाश्वेतान् विश्वहृद्दिशा ॥
नवविश्वज्ञशिष्यस्य शेमुष्या बलमद्भुतम् ॥ ७२ ॥

भक्तपावित्र्यदो रेजे पूजयन् द्वितयेन्दुवत् ॥
छात्रनेत्राब्जराजोऽयं पाठयन् पूर्णचन्द्रवत् ॥ ७३ ॥



(आ - ७२)
नित्यं पूज्याचार्यैरर्चिताः देवतामूर्तयः



(आ - ११)

परमपूज्य आचार्यदम्पती

त्रयीगोगोपिकासङ्गरासक्रीडाभिवर्धके ।।
तुषारत्विषि पूर्णे हि पूर्णतोषो रमेशितुः ।। ७४ ।।

तीर्थपूतच्छात्रपङ्क्तियुतः कृतिपतिस्ततः ।।
गन्धाक्षतादिभिः शुद्धं व्यधादद्धाऽसुधाम सः ।। ७५ ।।

विततालिकनिक्षिप्तलक्ष्मीनाथार्पिताक्षतः ।।
स वीक्षकाक्षिभिस्साक्षात्फालाक्ष इव लक्षितः ।। ७६ ।।

पीत्वा तीर्थं कृतार्थोऽयं शिष्यान् श्रीशार्पितं ततः ।।
भोजयन् बुभुजे भोज्यं भवभीकरभैषजम् ।। ७७ ।।

छात्रा ननन्दुर्भुञ्जानास्तच्छास्त्रामृतपायिनः ।।
चतुरर्थाश्च पीनोध्नीचतुरापीनपा इव ।। ७८ ।।

यजन् स याजयन् ज्ञानभोज्याभ्यां यज्ञमीश्वरम् ।।
एकदैव भजन् द्वेधा फलबाहुल्यभागभूत् ।। ७९ ।।

तस्यार्यस्य महायज्ञशीलस्य सहधर्मिणी ।।
रमारमणसद्भक्त्या नित्यं पत्यनुरूपिणी ।। ८० ।।

दैत्यारातिप्रीतिभूतिधृत्या नित्यं वसुन्धरा ।।
दशधीमतसम्बद्धाऽचञ्चलश्रद्धयाऽचला ।। ८१ ।।

भक्त्युद्भावितसद्धर्यप्रसक्तिलतया च भूः ।।
सत्कृत्या पृथिवी पृथ्व्या बन्धुमोददया सदा ।। ८२ ।।

---

७५ - ***असुधाम*** - *प्राणधाम शरीरम् ।* ७६ - *उत्प्रेक्षा ।*

७७ - ***श्रीशार्पितम्*** - *श्रीशाय अर्पितम् । श्रीशेन अर्पितमिति च । यसच्छालब्धमिति यावत् ।।*

८० - *अन्त्यकुलकम् ९० - श्लोकपर्यन्तम् ।*

पतिप्रेम्णा रसाऽनन्ता पातिव्रत्यादिसद्गुणैः ॥
विश्वम्भरा छात्रपुत्रपौत्रप्रभृतिविश्वतः ॥ ८३ ॥

स्थिरा सम्पद्विपत्कालानाकुलामलया धिया ॥
धरा संश्रितसङ्क्ष्टाधार्याहार्यचयेन च ॥ ८४ ॥

धरित्री तृप्तिमणिना यदृच्छालब्धसम्पदि ॥
धरणी पाणिपद्मस्थभूतिपद्मवतीत्त्विषा ॥ ८५ ॥

क्षोणिः श्रवणमोदिन्या वाण्या च क्षीणदोषया ॥
ज्याऽरिदारीषुवाङ्मुञ्चत्पतीश्वासानुगुण्यतः ॥ ८६ ॥

वसुमत्यपत्यवसुना वसनेनाक्षिमोदिना ॥
शरीरशेमुषीशक्त्याप्युर्वी सर्वसमर्थया ॥ ८७ ॥

ऋष्यर्चया काश्यपी च क्षितिश्च क्षीणतृष्णया ॥
सर्वंसहा शिष्यपूर्वसर्वामर्षादिचर्यया ॥ ८८ ॥

गवा गोत्रा हृदा पृथ्वी मुदाऽऽनन्दनदेन कुः ॥
मही महेन धिष्ण्येनावनिश्च क्षमया क्षमा ॥ ८९ ॥

कौशिकेन सती पत्या पतिवीक्षार्णवावधिः ॥
लक्ष्यम्बिकाभिधा साध्वी भूमौ भूमिनिभा बभौ ॥ ९० ॥

तद्दम्पतीप्रीतिभाजामैधेतां तनुचित्तनू ॥
हिमाऽहिमेदिनीध्वेशप्रीतिभाजामिवाधिकम् ॥ ९१ ॥

---

*९१ - हिमाहिमेदिनीध्वेशौ - बदरीनारायणवेङ्कटेशरूपिणौ ॥*

रक्तान्तोऽभूत् बही रक्ता ताम्बूलीरसवाससा ॥
माध्वागमानङ्गतातसङ्गत्तद्रसनाऽङ्गना ॥ १२ ॥

विपश्चित् पाठयन् छात्रान् रचयन्नुत सत्कृतीः ॥
चारुप्रवचनं नन्वन्नियाय समयं मुदा ॥ १३ ॥

आनक्तंभुक्ति धीशक्त्या मुक्तिदं भक्तवत्सलम् ॥
नित्यं भजन्नयं नूनं भुवि धन्योक्तिभाजनम् ॥ १४ ॥

शास्त्राभ्यासाभिधां दिव्यामहर्निशमुपासनाम् ॥
विदधद्विबुधोदात्तो विरलो हि धरातले ॥ १५ ॥

शयानोऽपि रतः शिष्यैः सह शास्त्रविमर्शने ॥
किं कामिनीविजिज्ञासा धीमतां प्रतिबन्धिका ॥ १६ ॥

१३ - रचयन्नितीत्युक्ताचार्यरचनाचातुर्यं दर्शयितुं आचार्याणामेव हस्ताक्षराणि अधःनिक्षिप्तानि ॥

अबाध्यत्वोपलक्षिततादात्म्यरूपेण सम्बन्धाभावाधिकरणत्वञ्च प्रतीयमान
स्वरूपं तत् शुक्तिरजतादेः [illegible] शुक्तितादात्म्येन प्रतीयमानतया दृष्टा-
न्ते साध्यवैकल्यम्। आपेक्षिक [illegible] सम्बन्धित्वाभावान्न विपक्ष [illegible]
मिति [illegible] प्रतीपदम्।
अत्र केचिदाहुः - [illegible] कालत्रयाबाध्यतादात्म्येन
[illegible] प्रतीयमानता [illegible]
षः। [illegible] कार्यस्य [illegible] तादात्म्येन [illegible]
[illegible] तदसत् [illegible] बुद्धितत्
[illegible] अङ्गीकारात् तस्यानैन्द्रियकत्वेन [illegible]
[illegible] प्रतिपादनात्। [illegible] कार्यशरीराणां प्रतिकर्म [illegible]
[illegible] निराकरिष्यमाणत्वेनासत्यपि रजतादि साधारण [illegible]
कार्यत्वस्य [illegible] सत्प्रतिपक्षः [illegible]

पार्श्वे कलत्रमेकत्रापरत्र छात्रसत्तमः ॥
आस्तामिति स्वभावोक्तौ भ्रमन्त्यत्युक्तितां जनाः ॥ ९७ ॥

भवारतस्य तस्यापि भावं समभवत्सुखम् ॥
सुखं हि दुःखवन्नूनमप्रयत्नेन गम्यते ॥ ९८ ॥

दक्षिणायनवद्यज्ञपुर्यां साधनवर्त्मनः ॥
उत्तरायणवत्तस्य धारवाडपुरीबभौ ॥ ९९ ॥

परीवारस्य तस्यासीत् तेन सर्वत्र संस्तुतिः ॥
गन्धेन गन्धयशसो विततस्यैव सन्ततम् ॥ १०० ॥

अराजत त्रिभी राजा रामचन्द्र इवानुजैः ॥
द्विजः स विदुषां राजा गुरुराजात्मजाग्रजः ॥ १०१ ॥

स्वस्रातततहृदाशाश्च चतस्रः प्रेमभप्रभाः ॥
पपारापारवात्सल्यकौमुद्या स मुदेन्दुवत् ॥ १०२ ॥

शिष्टः स तोकाष्टकान्तर्निष्ठलक्ष्म्यम्बिकाधवः ॥
अष्टैश्वर्यविशिष्टश्रीश्रीनिवासनिभो बभौ ॥ १०३ ॥

समृद्धसम्पदः शुद्धास्तनया विनयालयाः ॥
तदन्वयप्रपञ्चस्य प्रोक्ता लोकत्रयाख्यया । १०४ ॥

---

*१०१ - **त्रिभिः** - १ - हुनुगुन्द भीमसेनाचार्यः, २ - पण्डित केशवाचार्य जालीहाळ, ३ - हुनुगुन्द हनुमेशाचार्यः इति त्रिभिः ।*

*१०२ - **चतस्रः** - १ - पद्माम्बा, २ - सुभद्राम्बा, ३ - अक्कम्बा, ४ - सावित्रीबायी इति चतस्रः॥*

*१०४ - **तनयाः** - १ - राघवेन्द्राचार्य हुनुगुन्द, २ - सेतुरामाचार्य हुनुगुन्द, ३ - गोपालकृष्णाचार्य जालीहाळ ॥*

तत्सुन्दरपरीवारामरारामे विरेजिरे ।।
पञ्च पुत्र्यश्च सन्तानफलिन्यो द्युफलीनिभाः ।। १०५ ।।

धन्या हि बान्धवा ये तं पश्यन्तो विगतान्धताः ।।
भजन्तो हस्तिनो वाणीं श्रृण्वन्तः श्रुतिभागिनः ।। १०६ ।।

मित्रता चित्रगोः पुण्यमात्रतो नात्र संशयः ।।
महाव्याघ्रोऽपि तत्पात्रं चित्रमित्यन्यथा न किम् ? ।। १०७ ।।

श्रीशश्रीनाथभक्तानां मूर्तिमन्तमनुग्रहम् ।।
सदा सदाचारचैलं चञ्चलस्तौम्यहं किमु ।। १०८ ।।

हृद्यो हृद्द्योयोपतितो वर्णनबिन्दुः सुभक्तिघनजातः ।।
मन्दोऽपि साधुबन्धोश्चरिताम्भोधेस्सहेत किं विरहम् ।। १०९ ।।

करालेऽस्मिन् काले कलिकलुषजक्लेशनिलये
भवज्वालामालाहतहसिततूलाचलकुले ।।
स्वयं धर्मिष्ठोऽलं श्रितसुजनधर्मावनिरयं
परीक्षित् प्रत्यक्षः खलु खलकलिध्वंसनकरः ।। ११० ।।

---

*१०५ - **पञ्चपुत्र्यः** - १ - अलकनन्दाबायी, २ - सरस्वतीबायी, ३ - कृष्णवेणीबायी, ४ - सत्यभामाबायी, ५ - वेदवतीबायी.*

*१०७ - **चित्रगोः** - अद्भुतशास्त्रगोसम्पन्नस्य आचार्यस्येत्यर्थः । महाव्याघ्रः - महाहुलि गोपालाचार्य इत्यर्थान्तरम् । महाव्याघ्रः गोमित्रतापात्रमिति अदृष्टकारणाभावे चित्रं किं न ? इति योजितार्थः । "ಶ್ರೀ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರಂಥ ಮುಚ್ಚು ಮರೆಯಿಲ್ಲದೆ ಬಿಚ್ಚು ಮನಸ್ಸಿನಿಂದ ಮಾತನಾಡುವ, ಸಂಪತ್ತು ವಿಪತ್ತುಗಳಲ್ಲಿ ಏಕಪ್ರಕಾರವಾಗಿ ಇರುವ ಮಿತ್ರ ಸಿಕ್ಕುವುದು ಪ್ರಾಚೀನ ಜನ್ಮದ ಪುಣ್ಯದ ಫಲವೆಂದೇ ಹೇಳಬೇಕು." इति महाहुलि गोपालाचार्याणां अनुभवोक्तिमूलमिदं वर्णनम् ।।*

*१०९ - आकाशात् पतितं तोयं सागरं प्रति गच्छति इति हि नियतिः ।*

**भक्त्यब्जे रुरुशत्त्वलिर्लसति सच्छास्त्रद्युरत्नाश्रिते**
**मध्वोक्तोचिततन्त्रनालसहिते कैर्यस्य चर्चाभिधैः ।।**
**बद्धे हृद्रसकम्रवारिसदने साकं स्वनार्या मुदा**
**दान्तोऽयं भगवन्मतिप्रबलदस्तेजेद्बुधैः मां सदा ।। १११ ।।**

---

*१११ - **रुरुशत्त्वलिः** - दैत्यारिश्रीहरिरूपभ्रमर इत्यर्थः । ''रुरुर्दैत्ये मृगे'' इति हैमः । **कैः** - जलैरित्यर्थः । अत्र षड्दळचक्रबन्धः । **रुचिररचना - शतकत्रयकम्** इति कविकाव्यनामनिर्देशः।*



**कान्त्या चारुणजातवेदसदृशो वाचा कविर्भूसर -**
**प्रचार्योऽचिदलीकवाक्कुसमितेः हर्यक्षकल्पः प्रभुः ॥**
**शुद्धाचारमहाधनो रसत्रऋषिः श्रेयस्सुविद्यारविः**
**दारिद्र्याङ्ककळाधरोऽघसरणेर्नाशः कृतान्तोऽस्तुमे ॥ ११२ ॥**

---

*११२ - अत्र अष्टदळचक्रबन्धः । **रुचिरकविकविता - जालीहाळाचार्ययशः** इति कविकाव्यस्वरूपसूचना ।*



वन्देऽहमिन्द्रमुखमन्देतरत्रिदशवृन्देड्यसुन्दरपदे
नन्देरिते विमतिसन्देहनाशदमुकुन्देक्षणैककरणे ।।
मन्देतरार्थकृतिवृन्दे रतं बुधवरं देविताखिलगुरुं
निन्देतिहासरहितं देवचर्यमपि विन्दे श्रियेऽथ सुविदे ।। ११३ ।।

विरक्त्या सद्भक्त्या स्वविहितसुवृत्त्या विलसतः
पितुर्विद्यादानप्रवचनजकृष्णेष्टमनसः ।।
सुचारश्रीवाचा रुचिररचिताचार्यशतक -
त्रये गीताचार्यं द्वितयमपि कुर्यादुरुदयम् ।। ११४ ।।

इति रुचिराचार्यनामकेन बालकेन विरचिते आचार्यशतकत्रये

द्वितीयं आचारशतकं समाप्तम्

श्रीकृष्णार्पणमस्तु



*११४- विद्यादानात् प्रवचनाच्च जाते श्रीकृष्णस्य इष्टे सन्तोषकरकर्मणि मनः यस्य तस्येति भावः । अथ वा - कृष्णायाः द्रौपद्या इष्टः - श्री भीमसेनदेवः तत्र मनः विद्यादानप्रवचनजं यस्य तादृशस्य। पितुरित्यत्रान्वयः । ''स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमो धर्म'' इति द्रौपदीपतिभीमावतारेण श्रीमदाचार्येण सन्दर्शितं गीतासारं यथावदनुसरतः पितुः* ***सुचारश्रीवाचा*** *- सदाचारसम्पद्विषयकवाक्प्रभावेण, रुचिरेण रचितमिदं, श्री* ***गीताचार्यं*** *कृष्णारमणप्रियं श्रीकृष्णं कृपाकारिणं कुर्यादित्यर्थपूर्णा हि प्रार्थना।।*

॥ श्रीः ॥

॥ श्री गुरुराजो विजयते ॥

हरिः ॐ

# विचारशतकम्

स्तम्भीभूतकुवादशंबरनिधिर्गम्भीरवाणीनिधिः
सद्बोधाभिधदुग्धवृद्धजनतामुग्धाननामोदिनी ॥
कीर्तिव्याप्तशुभावनिश्च भजतां विद्यासुधादायिनी
भक्त्यालङ्कृततद्विचारसरणिर्बाभाति नित्यं भुवि ॥ १ ॥

तद्वादाख्यः सुरसितसरिद्वारिघोरप्रवाहः
नित्यं गन्ताऽमितमतिमतोत्कर्षरत्नाकरेशम् ॥
दूराच्चारुः सविधदरदः प्रेक्षकाणामराजीत्
यस्यान्तस्थाः कुमतनिरताः प्रेषिता अन्तकान्तम् ॥ २ ॥

नव्यन्याये नवतररसास्वादनोत्पत्तिहेतौ
सामान्योक्तौ खरतरपरिष्कारदुर्गम्यवित्तौ ॥
वाक्यार्थाजौ द्विजवरसुधीराजराजत्समाजे
लीला कूले कमलसरसोल्लासदा चिन्तयास्य ॥ ३ ॥

तत्र व्यद्योतत निजततप्रीतिभाजाऽनुजेन
युक्तः सीतापतिरिव हरिर्लक्ष्मणेनातुलेन ॥
नव्यं भव्यं सुदृढममलं मण्डयन् यस्स्ववादं
चक्रेऽलोले विबुधजलधौ चित्रतोल्लोलजालम् ॥ ४ ॥

---

२ - *रूपकश्लेषसंश्लेषः । मन्दाक्रान्ता ॥*

३ - ***सामान्योक्तौ*** *- सामान्यनिरुक्तौ इत्यर्थः ।* ***कमलसरसः*** *- तिरुपतिपुरे पद्मसरोवरस्य इत्यर्थः ॥*

४ - ***अनुजेन*** *- केशवाचार्यनामकेन ।* ***स्ववादं*** *- स्वस्य गुरोः वादमित्यर्थः ॥*

नानाकोटिक्रमखरपरिष्कारघोरानलोद्य -
ज्ज्वालादग्धाखिलखलमतानङ्गशृङ्गारलीला ॥
नित्यं चित्रानुगमगमना नूत्नतद्वादमाला
प्रैक्षि प्रेक्षाक्षिभिरिह सतां त्र्यक्षफालाक्षिजेव ॥ ५ ॥

शुभ्रश्रोतृप्रवराशिखिनां शर्मणाऽऽसाभ्रवाणी
घण्टावाणी सुखमुनिसुवाक्श्रीशपूजोत्सवेन ॥
दुर्वाङ्मत्तद्विरदरदानेन वन्येन्द्रवाणी
कान्तावाणी बुधमणिहृदाकर्षणेनास्य वाणी ॥ ६ ॥

वादाजौ तद्विजयमतुलं वर्णये किन्नु यत्र
सत्याभिज्ञद्युमणिररुणः श्रीनृसिंहौषधीशः ॥
धीरास्तारास्सुजनहृदहो दुर्मनीषा निशा च
सर्वे नूनं सदसि मिलिताः साक्षिणोऽलक्षयंस्ते ॥ ७ ॥

वीक्षारुद्धाऽबुधजनगिरः कांस्यनिस्वानभाजः
प्रत्युक्त्यारिग्रहणनिरतश्रोत्रसद्द्वारपस्य ॥
वादोद्वेगाधिगततरुणोष्णांशुशोणत्विषोऽस्य
स्तोत्रे भूषाऽभवदिह भृशं पौनरुक्त्याख्यदोषः ॥ ८ ॥

तीर्थक्षेत्रप्रवरगमने नन्दतीर्थामृतार्थं
यच्छन्नच्छान्निजपरिजनानाशु तन्वन् सुधीशः ॥
मध्येमार्गं परसमयिनामन्धजातान्धकानां
भीमाभोऽभात्स निरभिभवो भूसुरो भासुरोऽलम् ॥ ९ ॥

५ - *उत्प्रेक्षा ।*

६ - *उल्लेखः ।*

७ - ***श्रीनृसिंहौशधीशः*** *- वरखेड नरसिंहाचार्यः चन्द्र इत्यर्थः । उत्प्रेक्षापरिणामसङ्करः ॥*

नित्यं मिथ्यामतहतिरतिव्यक्तचित्तोत्तमेष्टं
शिष्टं स्रष्टृप्रभृतिसुखदोत्कृष्टदृष्ट्यातिपुष्टम् ॥
भक्त्या भीत्या विबुधमभजन् यात्रिका येऽत्र ते तं
धन्या मान्या ननु जनगणाः पुण्यभाजोऽघशून्याः ॥ १० ॥

वाराणस्यां विशदधिषणास्वर्णशाणायितायां
श्रीमन्नारायणसुकरुणाकारणे श्रीबदर्याम् ॥
पूर्वापूर्वाखिलपुरवरे स्वीयकर्णाटदेशे
कीनाशान्ध्रादिदिशि विशदं शोभते वाग्यशोऽस्य ॥ ११ ॥

चण्डक्ष्वेडासदृशदृढवाग्गूढतर्कप्रचण्डे
रीढाव्रीडानिगडनतदुष्पण्डितस्तेनतुण्डे ॥
शौण्डव्यासार्णवभवमणौ ताण्डवे भूमिमण्डे
क्रीडा व्याडे हरिनटनवद्व्याडपुर्यास तस्य ॥ १२ ॥

वादे विद्वद्विपिनदहने दिव्यदावाग्निमेनं
प्रामाण्योक्तावसदृशदृशोऽदार्यशौर्येण घोरम् ॥
धीरं स्वैरं स्वपरमतरूपार्णवोद्यद्विहारं
नन्दं कुन्दापुरयतिवरः प्राप पश्यन्नमन्दम् ॥ १३ ॥

कष्टाकृष्टान् तदनिलचलद्दक्षपक्षेषुनष्टान्
दृष्ट्वा घृष्ट्या निजबुधभटान् वादयुद्धे प्रविष्टे ॥
राज्ञि प्राज्ञेऽगणितकणभुक्पक्षरक्षैकदीक्षे
तुष्टो वादक्षुधितविबुधो वीक्ष्य तीक्ष्णारिभक्ष्यम् ॥ १४ ॥

चातुर्येण स्वपरवचनोषर्बुधज्वालयाऽलं
तत्पक्षाख्यं दशमुखपुरं सन्दहन्नार्यवर्यः ॥
तन्वन्नेवं तमवनिपतिं व्याकुलं मूकलीलं
धन्यं तेने स्वगतमतुलं रामदूतस्य दौत्यम् ॥ १५ ॥

विद्वद्वृन्दे युधि लसति धीश्वासगैर्न्यायबाणैः
द्वैताद्वैताभिधगुरुगदायुद्धबद्धेऽथ सर्वैः ॥
दृष्टः शिष्टः पटुरिह कटिं धार्तराष्ट्रस्य भिन्दन्
हुंकुर्वाणो विजयविलसद्भीमवत् भीमसन्धः ॥ १६ ॥

माध्वोद्यद्विजयध्वजेन सुजनानन्दप्रदेनेन्दिरा -
नेत्राम्भोजविधुं भुजङ्गशयनं भक्त्या भजन् भूसुरः ॥
राजद्राजसभाजनं बहुविधं नाङ्गीचकारेति किं
चित्रं यत्र पुरैव दुर्लभजगद्राजप्रसादोऽजनि ॥ १७ ॥

विद्वच्छब्दधरा धरातलगता भारा भुवः केवलं
दुर्वाग्घोरतरारिवारहरणाऽशक्तान्तरास्सन्ति ये ॥
क्षोणेर्भूषणमिष्यते शुभजनैर्दुष्पक्षशिक्षाप्तसत् -
पक्षीशप्रियसात्त्विकार्यतनयार्याद्यं हि विद्वत्कुलम् ॥ १८ ॥

तीर्थक्षेत्रनिषेवणाभिधमिषेणाक्षीणविद्याधरः
दुर्वादारिविदारणार्थमवनौ सञ्चारभाराश्रयः ॥
सम्प्राप्ताखिलवादतूलदहनं तन्वन् गुरोस्तोषणं
रेजेऽलं ज्वलनप्रभो जगति सद्वातागमप्रोज्वलः ॥ १९ ॥

तद्वादारुणपूषणेक्षणविहीनाक्षा भणन्तो मृषे -
त्येवं तं च हसन्तु घूकसदृशाः का तेन हानिर्भवेत् ॥
नूनं तस्य हि घोरवादविलसद्धर्यक्षलीलेक्षणे
आदर्शा इह सन्ति साक्षिण इव ग्रन्था महान्तोऽधुना ॥ २० ॥

श्रीमन्न्यायामृताख्यामृतममरतरुस्तत्तरङ्गिण्युपाह्वः
यत्रामोदद्युधेनुः परतिमिरहरः कण्टकोद्धारचन्द्रः ॥

१७ - *शार्दूलविक्रीडितम् ।*

२० - *उत्प्रेक्षा ।*



(वि - २८)

अभिनवशरदागमकर्तारः पूज्याचार्याः





(चि - १६)

श्रीलक्ष्मीशतीर्थश्रीपादानां सन्निधौ वाक्यार्थे कोच्चिपरीक्षिन्महाराजविजयिनः श्री आचार्याः

मध्वोक्तिश्रीशराजद्विजयरथवहद्दिव्यसौगन्ध्यवाहः
तद्धीवार्धौ सुधाऽप्यर्णव इव पयसामर्णवो भाति नव्यः ॥ २१ ॥

सौगन्ध्यं साधुवन्द्यं कुमतततिहतौ हेतिभूतोक्तिहेतु
संहर्तुं रंहसाग्निं पतग इव परिष्वज्य तज्ज्वालयालम् ॥
दग्धासानन्तकृष्णाभिधविबुधगलं गोभिराहत्य दिग्धैः
कार्ष्ण्यस्यानन्त्यमास्ये स विदधदभवन्नामधन्यत्वहेतुः ॥ २२ ॥

मायावादाभिधाब्धिप्रभभयदबलेऽद्वैतसिद्ध्याख्यमुग्रं
ब्रह्मानन्द्यादिनानालघुगुरुविवृतिव्यूहबद्धे निगूढं ॥
सिन्ध्वीशं ध्यानकृष्णोदितसुपथगतो नाशयन्नेष रेजे
सम्राट्सत्प्रज्ञमान्योऽर्जुन इव नृवनाध्यक्षभीमाक्षिरक्षः ॥ २३ ॥

---

*२१ - श्रीन्यायामृतार्णवमन्थनेन सर्वप्राचीनन्यायामृतादिग्रन्थसम्प्रतिपत्तिर्भवतीति भावेनेदं पद्यम् ॥*

*२२ - अनन्तकृष्णशास्त्रीनामकः पण्डितः श्रीन्यायामृतप्रवर्तितवाक्यार्थसरणिप्रबोधकान् सर्वानुपलब्धग्रन्थानेकत्र सङ्कलय्य मुद्रापयितुकामः, "अन्ते सिद्धस्तु सिद्धान्तः मध्वस्यागम एव हि" इति न्यायेनान्तिमतया सिद्धं श्रीवनमालिमिश्रप्रणीतं ब्रह्मानन्दीदाहकं श्रीन्यायामृतसौगन्ध्यं द्वित्रिशतमानेभ्यः केनाप्यद्वैतिना अखण्डितमत एव विषयतोऽखण्ड्यमित्यवलोक्य नामतो वा तत्खण्डनं भवेदिति वाञ्छया पूर्वापराविचारेण सौगन्ध्यविमर्शनामकं ग्रन्थाभासं कृत्वा "श्रीन्यायामृताद्वैतसिद्धी" इति शीर्षिकोपेतपुस्तकेऽन्तिमतया निवेशितवान् । तत्खण्डनायार्णवमरीरचन्नाचार्या इति स्तूयतेऽनेनपद्येन॥*

*२३ - श्रीसत्यध्यानतीर्थश्रीचरणाः अनन्तकृष्णशास्त्रिस्वरूपं सम्यक् जानन्तः एष्यति काले अयं किमपि कुहकं विदध्यादेवेति पाठकाल एव तन्निरसनरीतिं श्रीआचार्येभ्य उपदिदिशुः । तदनुसारेणैवायं ग्रन्थः विरचित इति श्रीआचार्यः -* ***ध्यानकृष्णोदितसुपथगत*** *इति स्तुतिः ॥* ***सम्राट्सत्प्रज्ञमान्यः*** *- सप्तविंशतितमे वयस्येव एतादृशासदृशविद्वन्मात्रगम्यप्रौढप्रबन्धं विधाय मुद्राप्य स्वकरकमले समर्प्यानितरसाधारणीं माध्वराद्धान्तसेवां विदधत आचार्यान् दृष्ट्वा, नितरां सन्तुष्टाः श्रीसत्यप्रज्ञतीर्थश्रीचरणाः विशिष्टं विद्वद्गौरवं अनुजगृहुः। एतादृशप्रबन्धप्रकाशनादिकार्यं अस्मादृशैः पीठाधिपतिभिरेव कर्तव्यमित्युक्त्वा कृत्स्नं मुद्रणव्ययं (५००रूप्यकाणि) तत्क्षणादेव वात्सल्येन प्रददुश्च । इति भावः ॥* ***नृवनाध्यक्षः*** *- नृ - नर, वनाध्यक्ष - सिंह नरसिंह, इति यावत्॥ पण्डितप्रकाण्डाः न्यायपञ्चाननेत्याद्यनेकबिरुदभूषिताः श्रीचार्येभ्यः तर्कविद्योपदेशकाः श्रीवरखेडोपाह्वाः नरसिंहाचार्या एतत्प्रबन्धप्रणयने बहिरिव ग्रन्थेऽपि भूमिकां आरचय्य प्रोत्साहयन्तः अन्वग्रहिषुरिति भावः॥*

द्वैताद्वैताहवान्तस्स्थितबुधधिषणाह्लादिनी यं न यान्ती
मिथ्याधीपङ्कपूर्णह्रद इव जडतापूरिता साम्प्रतं स्यात् ॥
तस्यातुल्यार्णवस्य प्रणतिरियमहो धीरवर्यप्रपञ्चे
सत्यध्यानार्यकीर्तेर्लसदमृतशिलाशासनाभा विभाति ॥ २४ ॥

दृष्ट्वा सीतां कुदृष्ट्या विततमतिमतश्रीशभक्तां सुधाख्यां
क्लेशं दातुं वृथा तच्छुभदयहृदयस्यागतस्यासुरस्य ॥
काकस्यानन्तकृष्णाभिधकुरवकरस्याक्षियुग्मक्षयस्य
हेतुर्हेतिद्वयाभं जगति विजयते कण्टकोद्धारयुग्मम् ॥ २५ ॥

दुर्भाषाध्वान्तगूढं बुधसुखदसुधामण्डनग्रन्थरत्नं
ध्वस्तध्वान्ता ज्वलन्ती निजविजयदवाग्ज्योतिषा दर्शयन्ती ॥
सन्मोदं वर्धयन्ती कृतिरनलतुला कण्टकोद्धारनाम्नी
धत्तेऽप्यन्या धरित्र्यां दहनविधिमहो दुर्मतानां मृतानाम् ॥ २६ ॥

भिन्दन् प्रौढप्रबन्धत्रयपदभयदोग्रत्रिशूलाग्रतोऽलं
मायीशानन्तकृष्णं त्रिविधमथ परिच्छेदमस्मिंश्च यच्छन् ॥
प्राप्तं स्वप्नेऽप्यनाप्यं च्युतवचनपरिच्छेदचिद्ब्रह्मभावं
तद्युक्त्यैवानृतेशं स च विदधदगाच्छत्रुतां मित्रतां च ॥ २७ ॥

सन्देहाज्ञानमिथ्याविदनलवलयज्वालसन्तापशापे
दुर्मार्ताण्डे प्रचण्डे कलिमलमलिने भूतले घोरकाले ॥

२५ - *श्रीमन्न्यायसुधाकण्टकोद्धारवर्णनाय प्रवृत्तमेतत् ॥*

२६ - *श्रीन्यायसुधामण्डनकण्टकोद्धारग्रन्थवर्णनमेतत् ॥*

२७ - इदमुक्तं भवति । *अनिर्वाच्यापरिच्छिन्नाद्वैतब्रह्मैक्यविशिष्टः अनन्तकृष्णशास्त्री मिथ्या, परिच्छिन्नत्वात् (ग्रन्थत्रयप्राप्तपरिच्छेदत्रयवत्त्वात्) शुक्तिरूप्यवत् । इति परिच्छिन्नत्वरूपतदुक्तहेतोः मिथ्यात्वसाधकत्वेन मित्रत्वम् । तन्मात्र एव तत्पर्यवसानेन शत्रुत्वमिति भावः ॥*

आयान्ती ग्रीष्मतीयं कृतिशरदसतां चारुचर्चाब्धिजोद्य -
द्विद्यावातागमेता हतकुमततमश्चन्द्रिकाव्याप्तनाका ॥ २८ ॥

मार्ताण्डेऽप्यक्रमेण प्रकटितुमपटावुद्यतेऽद्यापि दूरे
चिन्तातापादिनानामलहरशरदोऽप्यागमे सागमा सा ॥
पञ्चम्याः पञ्चकेऽह्नामनुचितवचसां पञ्चतामञ्चयन्ती
व्यासप्रार्चाप्रपञ्चा शरदितपुरुषप्रोत्तमाऽऽस्तेऽधिकर्तुः ॥ २९ ॥

माला कीलालनिध्यालयजलनिधिजोल्लासदायीशलोल -
प्रेक्षाप्तातुल्यमूल्या खलकुलदलने शूलतुल्योरुलीला ॥

---

*२८ - अभिनवशरदागमग्रन्थवर्णनमेतत् ॥*

*२९ - तत्वमार्तण्डनामकः श्रीवैष्णवग्रंन्थः द्वित्रिशतमानतः पूर्वमेव श्रीव्यासतत्वज्ञतीर्थश्रीचरणैः 'शरदागम' इति ग्रन्थेन खण्डित इति अपटुः । 'स च शरदागमः दुर्दैवेन नोपलभ्यत' इति माध्वानां खेदस्थितिं तथा चन्द्रिकामण्डनाचार्याणां श्रीसत्यध्यानतीर्थश्रीचरणानां अनुपस्थितिं दृष्ट्वा 'इदानीं तत्वमार्तण्डप्रकटनं करवाम, यतस्तत्खाण्डनक्षमा न क्षमायां सन्ति' इति अक्रमेण श्रीवैष्णवैर्विस्मृतसत्यध्यानतीर्थ प्रियशिष्यजालिहाळाचार्यसामर्थ्यैः कैश्चित् मुद्रापित इति तत्वमार्तण्डः अक्रमेण प्रकटितुं उद्युक्तः । मार्तण्डः (सूर्यः) अक्रमेण (सङ्क्रमराहित्येन) यदा प्रकटितुमुद्युक्तः तदा मलमासः खलु प्राप्नोति । नैजसाधनार्थमिष्टस्य निर्मलनिजमासस्येव अत्र निर्मलशरदागमस्य सुदूरत्वात्, तदा पुरुषोत्तममासवत् (अधिकमासवत्) पुरुषोत्तमशरदागमः साधकानां अपेक्षितः । तादृशः पुरुषोत्तमशरदागम एव श्री आचार्याणां शरदागमग्रन्थः । प्रकाशनात्पूर्वमेव कथञ्चित् स्वशिष्यैरानीय अश्विनशुद्धतृतीयायां प्रदत्तं तत्वमार्तण्डं दिनद्वये सम्यगवलोक्य, तद्विषयसम्बन्धिग्रन्थान्तराण्यपि समीक्ष्य, मूलनक्षत्रे श्रीवेदव्यासरूपिणं परमात्मानं पुस्तकेषु आवाह्य, विना तत्वमार्तण्डं ग्रन्थान्तराणि अपश्यन्, पञ्चम्या आरभ्य पञ्चदिनेषु (विजयदशमीदिने) पञ्चाधिकरणीपर्यन्तं अभिनवशरदागमं विलिख्य, श्रीव्यासतीर्थकृतचन्द्रिकाया अर्चनमेव श्रीवेदव्यासार्चनमिति प्रपञ्चयन् श्री आचार्यस्तं मुद्रापयितुं स्वशिष्याय प्रादात् । पुरुषोत्तममास इव पुरुषप्रोत्तमत्वं (आनन्दतारम्यसमर्थनपूर्वकं परमात्मनः निरवधिकानन्द इति प्रकृष्टोत्तमत्वं) समर्थयन्ती सा शरत् अधिक-ऋतुरिव विद्यमाना यदा तूर्णं प्रकाशिता ततस्तत्वमार्तण्डः मुद्रापितोपि न प्रकाशनपथमितः कोष्ठनिष्ठ एवाभूदिति 'अद्यापि दूर' इति मार्तण्डेप्यन्वेति । 'तत्त्वालोका' द्युत्तरकालीनग्रन्थस्थाक्षेपोत्तरचतुरत्वसूचनाय 'अनुचितवचसां पञ्चतामञ्चयन्ती'त्युक्तमित्यलं महता पल्लवितेन ॥*

राजत्सद्वैजयीन्द्रध्वजविजयमणिं वैजयन्ती धरन्ती
माध्वत्वाप्त्यै सुधीनां विलसति तुलसीहारवत्कण्ठवारे ॥ ३० ॥

हृद्यो विद्याविवेको जनक इव मुदा बोधकोऽवध्यवाको
विद्वद्वस्थुप्रभूतातुलकलहहरद्दिव्यसन्न्यायदाता ॥
बाभात्यम्बोधिभानुर्विविधगमनसद्वाग्धुनीसङ्गमेन
तच्छस्तागस्त्यहस्तस्थितविततयशश्चोलिकीलाललीलः ॥ ३१॥

संक्षिप्तं क्षिप्तदोषं नवविविधपरिष्काररराजद्विचारं
नूत्नं धीरान्तराणां रुचिरविवरणं क्रोडपत्राभमस्य ॥
आज्यद्राक्ष्यादिरूपामितविवृतिलसत्तत्त्वसंख्यानटीका -
रूपे सम्प्रीतगोपे धरति हि मधुरे पायसे केसराभाम् ॥ ३२ ॥

मायापेयं निपीय श्रुतिविषहमिहाक्रुश्य विज्ञापितस्व -
श्वाकारं द्रावितं द्राग्विजयिहरिसुतैर्मायिकुग्रामसिंहम् ॥
आयान्तुं चोदितं सद्विपिनमपि पुनस्ताम्रचूडैः कुरावैः
मध्ये पादैर्निरून्धन् विलसति शरभो(ऽ)शेषगोभूषणाभः ॥ ३३ ॥

---

३० - *विजयीन्द्रविजयवैजयन्तीकृतिस्तुतिरियम् ॥*

३१ - *अयं परापरविद्याविषये चिराद्विद्यामानविवादं सर्वहृदयङ्गमतया परिहरन् निर्णयजनकः प्रबन्धः।*

३२ - *तत्वसङ्ख्यानटीकाविवरणवर्णनमेतत् ।*

३३- ***श्वाकारं*** - *अपेयदीक्षितइत्याकारं नाम इति यावत् इत्यप्यर्थः ।* ***विजयिहरिसुतैः*** - *श्रीविजयीन्द्रतीर्थश्रीचरणादिहरिभक्तैरित्यप्यर्थः। ताम्रचूडैः - ताम्रवत् रक्तचूडामण्डितैः मखिवर्यभूषण - सन्दर्भविवरणादि प्रणेतृभिः इति कथञ्चिदर्थान्तिरोररीकरणे श्लेषालङ्कारः । कुक्कुटमात्रग्रहणे समासोक्तिप्रसक्तिः ।* ***पादैः*** - *स्वपदसम्बन्धिव्याख्यानैरित्यर्थान्तरम् ।* ***शरभः*** - *प्राणी । शरवत् भा यस्य तादृशः।* ***शस्य*** - *सुखस्य* ***ईषः*** - *प्राप्तिः यस्मात्तादृशस्य सुखतीर्थस्य गावः भूषणाभः । स्वव्यख्यासहितसिद्धान्तभूषणवर्णनमिदम् ॥*

विद्याक्षुत्पीडितानां मधुरतरसुधाभोजने तीर्थचोलिः
मत्तानां पण्डितानां दुरधिगमतरस्वान्तरापारवार्धिः ॥
सद्भाषाभूषवैशेषिकसुनयसुधाकूतमस्तीत्यचित्रं
विद्यैश्वर्ये हि दैवे विघटितघटना चित्रतां कुत्र कुर्यात् ॥ ३४ ॥

सालङ्कारा सुधीरामृतपतिजनिता गद्यपद्याभिधोद्य -
द्विद्यावद्यादिदूराम्बुजसदृशपदा सुन्दराकारचीरा ॥
श्रित्वा श्रीजातवेदं जगदसमपतिं स्वाश्रितेष्टप्रदात्री
विश्रान्तोदन्तकीर्तिः श्रयति सुविवृतिर्विश्रुता श्रीश्रुतीनाम् ॥ ३५ ॥

धीशुद्ध्यद्भाष्यटीकाविवरणगणसन्दर्शितोद्यद्विचारः
ईशावास्याभिधानश्रुतिशिखरलसत्पञ्चमन्त्रप्रपञ्चः ॥
दुष्टानां मुष्टिबन्धः दृढहतिदमिलत्पञ्चपुष्टाङ्गुलीतः
शिष्टानामिष्टदाताऽविदघहतिददत्पञ्चगव्यायतेऽयम् ॥ ३६ ॥

श्रीमध्वार्यादिनानाबुधमणिधिषणापुष्करव्याप्तरूपं
संगृह्यावेदयत्तत्कृतियुगलमलं सूत्रकक्ष्योत्तमार्थम् ॥
व्याप्ताकाशस्य विष्णोरणुहृदयगुहास्थोत्तमात्मान्तरात्मा-
कारौ कम्राविवालं लसति बुधगुहामण्डलेऽतुल्यलीलम् ॥ ३७ ॥

व्याख्या प्रामाण्यवादप्रखरतरगिरां धीरवारान्तराल -
ज्वालाया आज्यतुल्या खलकुलदहने व्यालदावानलाभा ॥

---

३४ - **दैवे** - *अलौकिके । विद्यारूपे ऐश्वर्ये अचिन्त्येश्वरशक्ताविति यावत् । श्रीवैशेषिकनयन्यायसुधाकूतवर्णनमिदम् ॥*

३५ - जाताः - *प्रथममुपलब्धा वेदा यस्मात्स तादृशं श्रीहरिम् । श्रयतीति श्रीरिव आचरतीत्यर्थः। श्रीसूक्तविवरणवर्णनमेतत् ॥*

३६ - *ईशावास्योपनिषद्व्याख्यास्तुतिरियम् ।*

३७ - *सूत्रार्थसङ्ग्रह - कक्ष्यार्थसङ्ग्रहरूपकृतियुगलस्तुतिरियम् ।*

नानाभङ्गस्य तुङ्गे बुधभुवि कमनीयान्तरङ्गाख्यरङ्गे
रङ्गेशप्रीतिहेतोर्मुनिकृतविलसत्ताण्डवस्याऽऽस नान्दी ॥ ३८ ॥

लक्ष्मव्याप्तिप्रमाणप्रभृतितरुलसट्टिप्पणीस्वर्णपुष्प -
प्रोद्यत्सौगन्ध्यबद्धश्वसनसुरभिवत्स्वान्तरायां वरायाम् ॥
दीघानर्घप्रमाणावनिगतजयराट्पद्धतौ वृद्धकीर्तौ
यात्रार्थं छात्रकाणां रथ इव विवृतिस्तस्य धत्ते सहायम् ॥ ३९ ॥

मीमांसातर्कशाब्दाभिधघनरसधृद्दिव्यधाराधरेण
टीकाव्याख्यादिसन्दर्शितपथगतिना तेन विक्षिप्य दत्ताः ॥
व्याख्या लघ्व्योऽथ गुर्व्यो गुरुवरजयराड्व्यासराट्पूर्ववाचां
विद्याकाशे च विद्युत्ततिरिव सुदृशां शर्म निर्मान्ति चित्रम् ॥ ४० ॥

ग्रन्थेशः सूक्तभेशः श्रुतिशिखरजटः ब्रह्मसूत्री सुधास्व -
र्गङ्गावान् व्यासवाक्त्रीक्षणपवनमतश्वासवान् स्वोक्तिवासाः ॥
टीकाव्याख्यादिभूषः परमदनहरो युक्त्युमालिङ्गिताङ्गः
मीमांसामांसशाब्दो हरिरतिरुधिरो भाति दीक्षादृढास्थिः ॥ ४१ ॥

वादप्रौढप्रबन्धान् धृतविविधसुधास्वादुचारूरुचर्चान्
प्राचीनाचार्यवाचामनुगमनविधौ बद्धशुद्धाग्र्यसन्धान् ॥

---

३८ - *तर्कताण्डवव्याख्यानवर्णनमिदम् ।*

३९ - *प्रमाणपद्धतिविवरणवर्णनमेतत् ।*

४० - *मोक्षादिधर्मस्वरूपविचारादिप्रबन्धाः अत्र वर्णनविषयाः ।*

४१ - **ग्रन्थेशः** - *आचार्यग्रन्थरुपः महारुद्र इत्यर्थः । ब्रह्मसूत्री, शाब्द इत्यत्र श्लेषः । आचार्यसमग्रग्रन्थाणां समग्रतयैकत्र वर्णनमिदम्॥*

४२ - **यद्विनेति** - *अस्मिन् शतमाने श्रीसत्यध्यानतीर्थश्रीचरणकालानन्तरं माध्वसिद्धान्तं दूषयितुं प्रवृत्ता नैके ग्रन्थाः ।*

*१) न्यायामृतसौगन्ध्यविमर्शः = श्रीन्यायामृतार्णवः ।*

*२) तत्वमार्तण्डः = अभिनवशारदागमः ।*

दुर्वाग्गर्वौघनिर्वापणपणसुचणान् वर्णये किन्नु मन्दः
माध्वानां यद्विना नोऽवनमवनितले माननं चाधुना स्यात् ॥ ४२ ॥

चण्डक्रीडः स शौण्डः परवचनरिपोः पीडने पण्डितेशः.
श्रीमन्मध्वागमाब्धेर्विधुरिव बहुधा वर्धकोऽवध्यवाकः ॥
धन्यो मान्योऽस्ति कन्यां भगवति कवितामर्पयन् तर्पितेशः
याऽऽद्याध्यायोन्त्यपादोदितगतियुतवाग्जातिवृत्तिं विधत्ते ॥ ४३ ॥

भव्यं सत्सेव्यदीव्यद्विजयनिजगुरोर्वैभवं वर्णयत्त -
द्दिव्यं काव्यं च नव्यं स्वपितुरपि पितेवास्ति रम्येषु रम्यम् ॥

---

| | | |
|---|---|---|
| *३) विजयीन्द्रपराजयः* | = | *विजयीन्द्रविजयवैजयन्ती ।* |
| *४) अद्वैततत्वसुधा* | = | *न्यायसुधाकण्टकोद्धारः । (भाग - १)* |
| *५) न्यायचन्द्रिकाभूमिका* | = | *न्यायसुधाकण्टकोद्धारः । (भाग - २)* |
| *६) मध्वतन्त्रमुखमर्दनम्* | = | *सिद्धान्तभूषणम्।* |
| *(मध्वतन्त्रमुखभूषणरूपविजयीन्द्रतीर्थ श्रीचारणकृतग्रन्थरत्ननिरसनपरमसिवर्य भूषणरूपरिप्पणी सहितम् तथा मध्वमुखालङ्कारनिरसनपरचिन्नस्वामिशास्त्रीकृत लघुटिप्पणी सहितम्)* | | *(मखिवर्यभूषणाद्याधुनिक परव्याख्याखण्डनपर स्वीयव्याख्यासमेतम् )* |

*एतेषां सर्वेषां निस्सङ्कोचं खण्डनं विदधतः अखण्ड्या अत एवाद्याप्यदत्तोत्तराः प्रौढप्रबन्धा आचार्यीया एव । तत्रापि सौगन्ध्यविमर्शखण्डनाय न कोप्यन्यः प्रवृत्त इति अवनितले मध्वानामवनं माननमपि आचार्यप्रबन्धाश्रयणेनैवेति भावः ॥*

*४३ - **अद्याध्यायेति** - ब्रह्ममीमांसाशास्त्रे प्रथमाध्यायचतुर्थपादे अन्यत्रैव प्रसिद्धानां शब्दानां भगवति समन्वयः यथा प्रदर्शितः तथा कविताविषयेऽपि परैरन्याश्रयतया प्रसिद्धीकृतानां रसालङ्कारादीनां भगवत्येव समन्वयेन सार्थक्यं सम्पादितमाचार्यैरिति भावः ।*

*"अलङ्काराः सर्वे यदनुगमनाद्यन्ति भुवने वरालङ्कारत्वं बहुकलुशकृत्तामितरथा ।*

*इति हि आचार्यैरलङ्कारसङ्ग्रहे प्रमाणारुढा प्रतिज्ञा विहिता । आसमप्ति सार्थकीकृता च ॥*

नूत्नस्वानन्दतीर्थप्रियतमगुरुराजात्मजातस्य यस्मा -
ज्जाताऽभाग्यैरलभ्या बुधभुवि वितता नूत्ननारायणाख्या ॥ ४४ ॥

मन्दानन्दाय मन्देतरनिजगुरुराड्वैभवं भव्यभावं
संक्षिप्यावेदयन्ती कृतिरपि मितवाग्बद्धहृद्योरुपद्यैः ॥
अद्धा दत्तां विधत्ते निजवरजनुषा नूत्ननारायणाख्यां
विख्यातामर्थपूर्णामणुतनुरपि यास्त्यर्थसामर्थ्यपृथ्वी ॥ ४५ ॥

तीर्थक्षेत्रेश्वराणां सुविततयशसां दिव्यमाहात्म्यजातं
नैकैश्श्लोकैश्च लोकेश्वरसुखकरणैर्वर्णयच्चारुवर्णैः ॥
नूत्नं तत्काव्यरत्नं बुधहृदयगतं वादिराजार्यकाव्या -
दित्यच्छायेति तर्कं दृढयति खलु तत्पद्यविद्याविलासे ॥ ४६ ॥

---

*४४- श्रीगुरुवैभवमहाकाव्यवर्णनमिदम् । आचार्याः पञ्चदशदिवसेषु पञ्चदशसर्गात्मकमिदं महाकाव्यं विरचय्य गुरुवर्याणां श्रीमत्सत्यध्यानतीर्थ श्रीचरणानां शततमे जयन्त्युत्सवे १९७२ तमे क्रिस्ताब्दे अनितरसाधारणवैभवविशिष्टोत्सवपुरस्सरं प्रकाश्य गुरुसेवां सम्यगाचेरुः । 'अभिनवानन्दतीर्था' इति विख्यातानां निजगुरुणां महावैभवं वर्णयदिदं नवनवरसालङ्कारसुमधुरं भक्त्युद्रेककरं महाकाव्यमवलोक्य, स्वयं 'अभिनवकालिदास, बाणभट्ट' इति विश्रुता कविवर्याः श्रीगलगली रामाचार्याः नितरामुद्रिक्तानन्दतुन्दिलाः सहृदयाः, श्रीमदानन्दतीर्थभगवत्पादानां वैभवं सरसमधुरसुमध्वविजयमहाकाव्येन वर्णितवतो कविकुलतिलक श्रीमन्नारायणपण्डिताचार्यानेव स्मरन्त एवमस्तुवन् ।*

*"सत्यध्यानगुरोर्मुनेरभिनवस्वानन्दतीर्थप्रथा -*
*भाजः श्रीगुरुवैभवाभिधमिदं माहात्म्यसंस्फोरकम् ॥*
*नव्यं भव्यदकाव्यमाशु रचयन् श्रीश्रीनिवासः कवी -*
*ज्ञानो भाति महामना अभिनवो नारायणः पण्डितः ॥" इति ॥*

*४५ - अणुगुरुवैभवकाव्यवर्णनमिदम् ।*

*४६ - तीर्थक्षेत्रविलासस्तुतिरियम् ।*

श्रृङ्गारानङ्गतातस्सरसमधुरवाग्द्वारकान्तर्निवासः
हृद्यालङ्कारवासास्तदमलधिषणागोपयोषिद्विलासः ॥
भक्तिश्रीप्रेमपूर्णः मुदितबुधगणो विप्रसन्देशकृष्णः
चक्रेऽलं मेघदूतं खलु निहतमुखं पौण्ड्रकं वासुदेवम् ॥ ४७ ॥

गूढत्वप्राप्तशङ्काऽगणितमणिलसत्स्वान्तरं क्षारवारं
पारावारं च तीरावधिमकृतमितं कुम्भभूरित्यचित्रम् ॥
तच्चित्रं बालकानामणुहृदि कवन व्याप्तसद्विष्णुपादं
नैकालङ्काररतारं निरवधिकमसौ न्यक्षिपत् क्षिप्रमित्थम् ॥ ४८ ॥

नानारूपस्य विष्णोरगणितमहिमावर्णनासक्तवर्णं
नूत्नं नाम्ना सहस्रं नवरसमधुरं सुन्दरोदारकाव्यम् ॥
भक्त्यम्भोजातराजद्दशमदलमिवाभाति वैराग्यभाजां
प्राप्तालङ्काररासै रसिककविहृदां षष्ठपुष्पेष्विषुः स्यात् ॥ ४९ ॥

लक्ष्मीशं वेङ्कटेशं कुलपतिमतुलं प्रार्थयन्ती कृपार्थं
शुद्धैः पद्यैरनेकैर्वरनिगमशिरोवेद्यहृद्यार्थबद्धैः ॥
कारुण्याख्याननाम्नी कृतिरजितकृपां नेत्रजां कारयन्ती
नूनं नेत्रावतीं तां शुभदहरिदयाविष्णुपादीं विधत्ते ॥ ५० ॥

---

*४७ - विप्रसन्देशकाव्यवर्णनमिदम् । विप्रसन्देशकाव्ये मेघदूतस्थापातरमणीयार्थान्तरन्यासाद्यलङ्कारेषु अस्वारस्यप्रदर्शकार्थान्तरन्यासाद्यलङ्कारग्रन्थनात् 'मेघदूतं पौण्ड्रकं चक्रे' इत्यत्र वर्णितम् ।*

*४८ - अलङ्कारसङ्ग्रहस्तोत्रमिदम् ।*

*अलङ्काराः सर्वे यदनुगमनाद्यन्ति भुवने वरालङ्कारत्वं बहुकलुषकृत्तामितरथा ॥*

*त्रयीशास्त्राह्लादाकरकवनवाणीमृगदृशां अलङ्कारः सारो जयति स उदारो यदुपतिः ॥*

*इत्यलङ्कारसङ्ग्रहोक्ताचार्यकृतसङ्ग्राहकमिदं* ***कवनव्याप्तसद्विष्णुपादमिति*** *॥*

*४९ - भक्त्यम्भोजात इति - भक्तिर्नवदला इति प्रसिद्धिः । विष्णुसहस्राख्यमिदं काव्यं श्रवणादिवत् विशिष्टभक्त्याधायकतया दशमदलस्य पदमधिरोहतीति भावः । भगवति अलङ्कारसमन्वयार्थं ''अलङ्कारसङ्ग्रहस्य'' प्रवृत्तिरिव श्रृङ्गारादिरससमन्वयार्थं श्रृङ्गारस्तबकादियुततयाऽस्य प्रवृत्तिरिति सूचितं रासैरिति ॥*

*५० - श्रीवेङ्कटेशकारुण्याख्यानस्तुतिरियम् ।*

विष्णोर्लीलां स्तुवन्ती सुमधुरलहरीनामधेयं धरन्ती
धीरान्तर्यं हरन्ती कृतिरपरकृतीर्लीलयाऽलं जयन्ती ॥
अद्धा श्रद्धाधनानां पठनरतरसज्ञाधरत्सद्वराणां
भक्त्यब्धिं कौमुदीवत्कलयति हृदये नित्यमुद्रेकयुक्तम् ॥ ५१ ॥

प्रासश्वासाशनेते श्रुतिमणिलसिते दिव्यहस्तावलम्ब -
स्तोत्रानन्ते हृदन्तो विलसति विमले भक्त्यकूपारमध्ये ॥
नायातश्चेद्रमेशो यदि भवति तदा शेषशायित्वलिङ्गं
नूनं विष्णुत्वसिद्ध्यै व्यभिचरितमुतासिद्धिबद्धं भवेद्धि ॥ ५२ ॥

कल्याणं पाठकाणां पठदमलहृदां वेङ्कटेशप्रसादात्
कुर्वाणा वेङ्कटेशप्रभुवरचरितं हृद्यपद्यैर्ब्रुवाणा ॥
नूत्ना तेन प्रणीता स्तुतिरपि मितवाग्भूषिताऽभूतपूर्वा
स्वान्तः पृथ्वर्थपूर्णा भजति जगति सा बालकृष्णास्यकीर्तिम् ॥ ५३ ॥

स्तोत्राणां चित्रकीर्तिप्रततसुजगतां वक्तृपावित्र्यदानां
तस्याश्वग्रीवमध्वप्रभृतिगुरुवरप्रीतिभूतिप्रदानाम् ॥
चित्तार्चाद्याभिधानामगणितगुणसंवर्णनं भाति विष्णो -
र्नानाज्ञानिप्रणीतस्तुतिगणनमिवाशक्यसाध्यं ममेदम् ॥ ५४ ॥

काव्याग्रीयोत्तमाङ्गीं हरिपदनतसद्दर्शनां प्रासहास -
स्तुत्यास्यां खण्डकाव्यस्तनभरनमितां वृत्तवासस्सुबन्धाम् ॥

---

५१ - *विष्णुलहरीस्तुतिरियम् ।*

५२ - *अनेकभुजङ्गप्रयातवृत्तविलसितश्रीहयग्रीवहस्तावलम्बस्तोत्रवर्णनमेतत् ।*

५३ - *श्री श्रीनिवासकल्याणाष्टकस्तुतिरियम् ।*

५४ - *मानसपूजाद्यनेकस्तोत्रस्तोत्ररूपमिदम् ।*

५५- ***काव्याग्रीयम्*** *- महाकाव्यं गुरुवैभवाभिधम् ।* ***स्तुतयः*** *- मानसपूजादयः ।* ***खण्डकाव्ये*** *- तीर्थक्षेत्रविलासविप्रसन्देशरूपे ।* ***नानालङ्कारेति*** *अलङ्कारसङ्ग्रहग्रहणम् ।* ***सरसेति*** *- विष्णुसहस्रग्रहणम्।*

नानालङ्कारवन्तीं सरसहृदयसन्देशमाश्वर्पयन्तीं
प्रेम्णा पूर्णां सुवर्णां हरति सुकवितारुक्मिणीं किं न कृष्णः ॥ ५५ ॥

नित्यं सिद्धान्तसेवारतसकलकरानेकशाखासुरेखा -
ऽगण्यान्यायोक्त्यरण्यानलतुलविलसत्पुण्यवाणीहिरण्यः ॥
अर्वाचीनोऽपि चार्वाकृतिरयमयते टिप्पणीकारनिष्ठं
प्राचीनत्वं जानानामिति समयति सम्मानतां चाभिमानम् ॥ ५६ ॥

भाषालेशेन लभ्ये जगति बहुविधे माननेऽपि स्वकाव्य -
प्रौढग्रन्थादिजातं कृतमखिलजितः केवलं पूजनार्थम् ॥
मत्कृत्यं पश्यतेत्थं सुकृतहतिभिया यागवत्तेन नोक्तं
तस्मादस्य प्रबन्धप्रणयनविषये वर्णनं विश्वमान्यम् ॥ ५७ ॥

आर्यस्यामरभारतीविरचितस्तोत्रौघवद्राजते
हृद्यावद्यविदूरपद्यनिचयः कार्णाटवाण्या कृतः ॥
साध्वीनामधुनाऽपिभाति मधुरां सद्भक्तिभुक्तिं दद -
द्यो दिव्याक्षयपात्रचित्रसुयशःपीयूषपात्रायितः ॥ ५८ ॥

ग्रन्थान्न प्रकटान् व्यधादिति बुधो विद्याविलुब्धोऽपि नो
दुर्ग्रन्थप्रहतिप्रदप्रकटनैः क्षिप्रं सतः प्रीणयन् ॥
यश्चक्रे स्वपदाश्रितानतिजडान् शिष्यांश्च लोके चलद् -
ग्रन्थान् दुर्मतनाशने च कुशलान् तस्मिन् कथं लुब्धता ? ॥ ५९ ॥

---

*रुक्मिणीं* ***नकृष्णः*** *- कृष्णभिन्नः हरति किम् ? कृष्णः न हरति किम् ? इति द्विधा योजना । आचार्यकवितायाः समग्रतया एकत्र दर्शनमतात् । श्रीकृष्णार्पणमस्तु इत्यास्यापि निरूपणमिदम्॥*

५६ - ***अर्वाचीनः*** *- टिप्पणीकारनिष्ठं प्राचीनत्वं अयते - प्राचीनटिप्पणीकारसदृश इति जनानां अभिमानं समानतां सम्यक् अयति - इदमभिमानं सम्यक् मान (गौरव) रूपमित्यर्थः । प्रमाणमिति च भावः ।*

पीठाधीश्वरसोदरप्रभृतयो नानाप्रदेशस्थिताः
विप्रा वैदिकधर्ममात्रनिरता यच्छात्रतामागताः ॥
विद्यादानकृतिप्रकाशमधुरोपन्यासतृप्ताश्रिताः
तत्प्रीत्याकृतिशिष्यसन्ततिनुतिर्नूनं महासाहसम् ॥ ६० ॥

शिष्यत्वं खलु यस्य शुभ्रयशसो विश्वप्रशस्तीयते
यद्ग्रन्थस्तुतिरद्भुता गुरुगुणस्तोत्रायते नूतना ॥
सत्यध्यानयतीश्वरस्य करुणा यन्मूर्ध्नि रत्नायते
तच्छात्रव्रजवर्णनं श्रवणयोर्भूषायते शृण्वताम् ॥ ६१ ॥

व्यासार्यप्रततयशःप्रभूतसम्पद्वेदान्तावनरतमाध्वपीठराज्ये ॥
राजेव द्विजनिचये विराजमानः लक्ष्मीशस्तदमलविद्ययातिरेजे ॥ ६२ ॥

लक्ष्मीशोऽलभत गुरुत्वमाश्रमेण ध्यानार्याश्रयणगुणेन मित्रभावम् ॥
शिष्यत्वं तदुदितविद्ययास्य भेजे तच्चित्रं त्रयमिह दुर्लभं निविष्टम् ॥ ६३ ॥

श्रीरङ्गे यतिपतिना च चन्द्रिकायाः टीकाकृद्गुरुवरसन्निधौ सुधायाः ॥
तेनाऽचीकरत सुमङ्गलोत्सवं यस्सामर्थ्यं ननु वचनस्य दिव्यमस्य ॥ ६४ ॥

सद्वाताशनशयने च ताण्डवस्य माध्वानां विजयदमङ्गलोत्सवेन ॥
सम्प्राप्तस्वविततकीर्तिसौरभस्य लक्ष्मीशं कुसुममिवातनोत्स मूलम् ॥ ६५ ॥

---

६२ - *तदुक्तं निर्मत्सरैः पण्डितवरेण्यैः श्रीगलगलीरामाचार्यैः -*

*''सूनुः सत्त्विकमौलिरत्नगुरुराजाचार्यपुण्यात्मनां*
*सत्यध्यानमुनीशितुः प्रियतमः शिष्यो गुरूणां गुरोः ॥*
*छात्राणां धिषणावतां च निपुणश्शास्त्रेष्वलं देशिकः*
*पीठाधीश्वरपाठकोऽप्रतिभटो वादाहवेऽयं पटुः ॥ '' इति ॥*

६५ - **सद्वाताशनशयने** - *श्रेष्ठानन्तशयनक्षेत्रे ।*



(वि - ६७)
पूज्याचार्यसविधे प्रवचननिरता:
तदनुजा: पण्डितवर्य श्री केशवाचार्या:



(वि - ६३)

कुन्दापुर व्यासराजमठाधिपैः श्री १०८ श्री लक्ष्मीशतीर्थश्रीपादैः
सहिताः पूज्याचार्याः

क्षेत्रेषु द्विजमहितेषु मङ्गलानि ग्रन्थानां गुरुवरकर्तृसन्निधाने ॥
तेनायं यतिपतिना च कारयन् सन् चक्रेऽलं गुरुवचनामृताब्धिपूर्तिम् ॥६६॥

शेमुष्या अनवरतं परिश्रमेण दुर्वादे करिणि हरेः पराक्रमेण ॥
आर्यस्य द्वितयसहोदरे च शिष्यश्रेष्ठत्वं लसति यतौ यथाऽऽश्रमेण ॥ ६७ ॥

दुर्धर्षो मितधिषणैरयं मनीषी श्रीहर्षोऽखिलमतखण्डनौदनेन ॥
आदर्शो विशदविचारदर्शनेन शीर्षस्योत्तमजनुषो विशोभतेऽलम् ॥ ६८ ॥

आचार्यप्रखरकृतिप्रभाकरेषु राजत्सु प्रतिमतदस्युभीतिदेषु ॥
चन्द्राभा जगति जयन्ति तत्कृतीन्द्रा मन्दाक्ष्युत्पलसुखदानुवादभासाः ॥ ६९॥

सङ्गीते वरज इवानुजोर्ध्वकस्य चातुर्यं विदधदमोघवादनेऽयम् ॥
अग्रेजं तमनुससार धीरराजः गानं सल्लयलसितं यथा हि तालम् ॥ ७० ॥

सम्प्रीताग्रजसुखतीर्थविष्णुतीर्थःविद्याधीश्वरसहजातकेशवार्यः ॥
को वेत्थं न च विदितस्स केशवार्यःविद्याधीश्वरसुखतीर्थदार्यदासः ॥ ७१ ॥

विख्याते क्रतुनगरेऽग्रजप्रवृत्तं विज्ञानक्रतुमतुलं तनोति योऽलम् ॥
तन्नानास्तुतिरपि मज्जनायते मे तद्वर्याग्रजकरुणार्णवे सदैव ॥ ७२ ॥

सौन्दर्यद्युतिजितगन्धसारमूर्तिः बाह्लीकद्विगुणितरम्यहार्दकीर्तिः ॥
आचार्याश्रितिनिहताखिलान्तरार्तिः भीमाख्योऽभजदिममाप्तभक्तिभूतिः॥७३॥

श्रीन्यायामृतकृतिदेवताग्रजातं लेभेऽयं फलमपि पक्वमर्णवाख्यम् ॥
सत्पक्षिद्विजसमुदायमध्य आदौ कानीनाच्छुक इव सात्वतं पुराणम् ॥ ७४ ॥

---

७३ - ***भीमाख्यः*** - *श्रीसन्तेबिदनूरु भीमसेनाचार्यः ।*

वागीशात्मजकविताख्यरुक्मिणीसत्सन्देशं सविशदमर्पयन् स कृष्णे ॥
कुर्वाणोऽनुवदनमस्य भासते तत्सन्देशप्रदकरविप्रयुग्मरूपः ॥ ७५ ॥

सद्ग्रन्थानुवदनभानुना दिनेनः सद्ग्रन्थप्रवचनरोचिषा निशेनः ॥
आचार्योदितपथदीक्षितस्वयानः आचार्यं भजति सदा स भीमसेनः ॥ ७६ ॥

स्याज्ज्ञाने गुरुकृपया त्रिविक्रमत्वं विप्राणां तनुमनसा च वामनानम् ॥
इत्यस्योत्तमवचसो निदर्शनाभो भात्येतद्गुरुकरुणस्त्रिविक्रमार्यः ॥ ७७ ॥

राजेते नरहरिनामधारिविप्रौ सत्कृत्या स्वविहितया सदैव विद्याम् ॥
कुर्वाणौ गुरुकरुणोत्थितां कृतार्थौ अर्थस्यात्र हि वचसा प्रयत्नसाध्यः॥७८॥

आचार्यप्रवरपदाब्जसेवकोन्यः भाति श्रीनिलयपदाभिधेय आर्यः ॥
ध्यानार्यप्रवचनवैभवप्रकाशात् यस्स्वस्थं स्वगुरुपदं तनोति सार्थम् ॥ ७९ ॥

आदर्शो गुरुनियमौघदर्शनेऽयं आकर्षन् शुभधिषणान् स्वरूपभासा ॥
सङ्घर्षन् पिशुनमतासुरैः सुविद्यां संवर्षन् सुखयति साधुमाध्वबन्धून् ॥ ८०॥

तद्रम्यप्रवचनमाक्षिकं पिबन्तः सन्तस्तद्गुरुवचनामृतस्य वित्तिम् ॥
आर्योक्तिश्रुतिरहिता अपि प्रयान्ति श्रीविष्णोर्दशधिषणेक्षयेव देवाः ॥ ८१ ॥

---

*७५ - रुक्मिणीसन्देशं (द्वापरे) विप्ररूपेण परमात्मने समर्पितवन्तः श्री वादिराजगुरुराजाः । तत्सन्देशं (विप्रसन्देशं) विरचितवन्तः गुरवः पूज्याचार्याः । वागीशात्मज (वादिराजतीर्थ) कवितारूपरुक्मिण्याः सन्देशभूतं रुक्मिणीशविजयं प्रवचनद्वारा परमात्मने समर्प्य कर्नाटकभाषया विरच्य च विराजमानः भीमसेनाचार्यः पूर्वोक्तविप्रद्वयकार्यकारीति* ***विप्रयुग्मरूपः भासत*** *इति कविवर्णनम् ॥*

७७ - ***त्रिविक्रमार्यः*** *- उमर्जी त्रिविक्रमाचार्यः ॥*

७८ - ***नरहरिनामधारिविप्रौ*** *- श्रीशिरहट्टिनरसिंहाचार्यः बण्ड्वाळ नरसिंहाचार्यः ।*

७९ - ***श्रीनिलयपदाभिधेयः*** *- बाळगारु श्रीनिवासाचार्यः ।*



(चि - ७१)

पून्याचार्यसविधे प्रवचननिरता:
तत्प्रियशिष्या: पन्य वाळगारु श्रीनिवासाचार्या:

कः स्यात्तत्पितृकरुणात्रिपुत्रचित्रज्योत्स्नायास्ततपरिमाणवेदनेऽलम् ॥
यल्लेशप्रसरणतो हि लेखनीत्वं प्राप्तैतत्स्तुतिवरलेखने मतिर्मे ॥ ८२ ॥

छात्राग्र्यो भजति जगत्तले द्विजोऽन्य आचार्यं यदुपुरनाथनामधेयः ॥
यो लेभे निजगुरुवर्यषष्टिपूर्तौ श्रीसौधानुवदनतो निजेष्टपूर्तिम् ॥ ८३ ॥

आर्येष्टद्विजतनुजोऽलभिष्ट रामः तत्प्रीतिं तनुजनिभाग्भिरप्यलभ्याम् ॥
तद्बीजं सुकृतमपूर्वपूर्वजन्मसञ्चीर्णं तदितरदस्ति कारणं किम् ॥ ८४ ॥

आर्यं श्रीनिलयापदोन्य विप्रवर्यस्स्यादागोऽभजदिति भूतवाक्प्रयोगः ॥
श्रीन्यायामृतरससारमण्डनेन यस्मात्तद्भजनमभूतपूर्वमास्ते ॥ ८५ ॥

शक्त्याल्पेन धियो मयाऽत्र गणिताश्छात्रास्तु केचित्ततः
किन्तस्यार्यवरस्य शिष्यसरणौ स्यादल्पताधीस्सताम् ॥
शुभ्रेऽभ्रे कृतमर्भकेन गणनं तारासु कासाञ्चने -
त्येतस्मादगणेयतोडुगणगा नह्यस्ति नाशं गता ॥ ८६ ॥

शिष्यानेष शशास शुभ्रयशसः कुर्यात नो विद्यया
यूयं जीवनमित्यमुष्य शिरसाऽऽदेशश्च शिष्यैर्धृतः ॥
मन्ये तानशिषत्तथा स धनतां विद्यागतां रक्षितुं
विद्यायाः क्रयणे कथं नु धनता वर्तेत चिन्तां कुरु ॥ ८७ ॥

स्यात्केषाञ्चिदिहाद्य शिष्यशतकं किं तेन यत्र स्थित
एकोऽन्तेनिवसंश्च वेदविहिते कृत्ये न दीक्षायुतः ॥
शिष्यास्तस्य तु नैजधर्मनिरता येऽन्यांस्तथा कुर्वते
तेष्वेकस्य तुलां न याति शतकं वाङ्मात्रपौरुष्यकम् ॥ ८८ ॥

---

८३ - *यदुपुरनाथनामधेयः* - मैसूरु द्वारकानाथाचार्यः ।

८४ - ***आर्येष्टः*** - *बागलकोटे अनन्ताचार्यः । तत्तनुजः रामः - बागलकोटे रामाचार्यः ।*

८५ - ***श्रीनिलयपदः*** - *श्रीनिवासाचार्यः ताम्रपर्णी ।*

येषां माध्वपथेऽभवच्छुभगतिस्तच्चारुवाक्चर्यया
तत्सर्वं भुवनं सदैव खलु तच्छिष्यत्वभूत्याश्रयः ॥
यस्मिन् शेषगिरीशवर्यनृहरी विप्रोत्तमौ भूतले
कीनाशोत्तरदिग्भवध्रुवनिभौ सत्संस्तुतौ लौकिके ॥ ८९ ॥

यद्दिव्यस्वनशोभितप्रवचनप्रोत्थोग्रसंशासनात्
शिष्यत्वं जगताखिलेन समितं सन्मार्गदीक्षावता ॥
तस्यार्यप्रवरस्य च प्रवचनं पीयूषभाभाजनं
गण्यान्यातुलपुण्यपूर्णजनताकर्णैकलभ्यं भुवि ॥ ९० ॥

मात्सर्येण जिगीषया विमलया भक्त्याऽथ वित्तीप्सया
वक्तृश्रोतृविमर्शकादिजनता प्राप्ताऽखिलाऽऽशंकिता ॥
यस्योपन्यसनं शृणोति वदनैः कर्णैरुतेतीक्षकैः
बाह्यैस्तन्मधुरस्वनप्रवचनं कः पूर्णमावर्णयेत् ॥ ९१ ॥

पूर्वेद्युःश्रुतसुन्दरप्रवचनस्तुत्यादिनानास्वने
तत्रस्थे जनसागरे विशति सत्यार्येऽनुभूताऽद्भुता ॥
तद्भाषामृतपानकातरजनैस्सर्वत्र निश्शब्दता
तद्विक्षासरिदन्तरस्थितिबलाद्बालैरपि व्यापृता ॥ ९२ ॥

रागालापविलासशालिमधुरार्थापादमौळ्याभिध -
श्लोकेन स्तवनं गुरोर्बुधवरे भक्त्या दधत्यादितः ॥
बालाश्चित्रकथाश्च तत्त्वमबलास्तत्र स्थितं पूरुषा
धीरा दुर्मतनाशमित्थमखिलाः कांक्षत ऐक्षन्त तम् ॥ ९३ ॥

---

*९१ - येन केनापि निमित्तेन उपन्यासं श्रोतुमागता जनता एष्यद्विषयकुतूहला विस्मृतबाह्यप्रपञ्चा तदुपन्यासश्रवणमात्रमग्नतया अपिहितवदना भवतिस्म । तद्विक्षकाणां तदा इयमाशङ्का - श्रवणाय खलु कर्णौ उन्मुखीकर्तव्यौ । किमर्थं मुखमुद्धाट्यते ? इति । तदुत्प्रेक्षा इयमिति भावः ॥*

तत्रादौ विबुधेन तेन रचिता व्याप्ताऽद्भुता भूमिका
सद्विद्याबदरेच्छुपक्षिवसतेः पाराशरक्षेत्रवत् ॥
भक्तिस्त्रीप्रियकृष्णपादविहृतेर्वृन्दावनक्षेत्रवत्
दुर्वाक्कौरवहारिघोरसमितेर्जाता कुरुक्षेत्रवत् ॥ १४ ॥

यद्वाणीश्रवणेन मार्गगमनं त्यक्त्वाऽथ यं पश्यतां
यूनां नेत्रपथे प्रवेशरहिता मार्गे बहिस्तिष्ठताम् ॥
मञ्जीराद्भुतशिञ्जितोह्ययुवतीपादागतेः पद्धतिः
तद्वाक्पद्धतिरास्त धर्मकथने भैमीव तीक्ष्णा सदा ॥ १५ ॥

सौधस्योपरि सौधवत्स्वविषयं विष्णोःपदान्तं तदा
साहित्यादिकलाख्यविग्रहकुलैर्विस्तारयन् भूषयन् ॥
विश्वव्यापृतविश्वकर्मसदृशः कीर्त्या स विप्रोत्तमः
रेजे भूसुरमण्डलेन महितः भूविश्वकर्मप्रभः ॥ १६ ॥

स्वोक्तार्थेऽगणितप्रमाणगणतस्साधुत्वसंसाधकं
आक्षेपोत्तररूपदुःखसुखयोरूह्यान्ययोः कारणम् ॥
सन्तो वीक्ष्य यशोद्रिशृङ्गनिलयं तं श्रीनिवासं तदा
संसारे सुखदुःखहेतुमविदुः श्रीश्रीनिवासं न किम् ॥ १७ ॥

विश्वेषां विशयाश्रयोग्रविषयं वैदुष्यतः शोधयन्
नानामानपुरस्सरं बुधवरस्संवर्णयन् लीलया ॥
तेषां संशयनाशमाशु सुदृशा विश्वज्ञवाचा दधत्
किं जातो विशयो न वेति विशयं चक्रे स विश्वाश्रयम् ॥ १८ ॥

अद्वैतादिकुवादवेद्यविषयः तीक्ष्णं विषं केवलं
पीयूषं दशधीप्रदर्श्यविषयः नित्यामृतत्वप्रदद्वि ॥
आर्ये बोधयतीति दुर्मतविषं कांक्षेद्विजः को नु तं
यस्मादाशु विनाशमेत्यमरता विप्रस्थिता भूतले ॥ १९ ॥

या जाता जनतान्तरे मृदुतरे दीक्षा तु तत्राक्षया
सिद्धान्ते प्रचुरान्तरेण विवृते तद्धीमदुक्तेस्तदा ॥
मोहाहार्यविहारसंहतिकृतौ चातुर्यवत्याः पुरः
दार्ढ्येस्याश्च बिडौजसोऽतिसुदृढं वज्रं च तूलायते ॥ १०० ॥

अज्ञानामयपीडनेन बहुलं ग्लानाननान् सज्जनान्
नैष्ठुर्यासहतत्वजायुभजने बालौघवच्चञ्चलान् ॥
मातेवायमपाययत्करुणया विप्रः प्रमाता तदा
निक्षिप्यातिविचित्रचारुचरितक्षौद्रे च तत्त्वौषधम् ॥ १०१ ॥

तत्कालीनमयं प्रसिद्धविषयं गृह्णन् कथां वर्णयन्
वक्ति स्माखिलकालसिद्धमतुलं तत्त्वामृतं केवलम् ॥
तत्कालीनजना इवाज्ञसुखदं तत्कालतत्वानृतं
तत्कालीनबुधोऽपि नोच इति किं तेषां स कालेऽभवत् ॥ १०२ ॥

सौन्दर्याचलभूमिकाभिधभुवि प्रोद्भूतनानाकथा -
वृक्षाग्रस्थितत्वपुष्पनिकरं दासालयः संश्रिताः ॥
तत्सारं समगृह्णतैवमिति तत्पद्यानि गायन् वदन्
स व्यासोक्तिपयस्सु दाससुपदक्षौद्रं तदामेलयत् ॥ १०३ ॥

हृत्पात्रे स कथापयोऽमितसुहृद्वत्सां दुहन् व्यासगां
कुर्वन् भक्तिरसेन तद्दधि सुधीमन्थेन मथ्नन् द्विधा ॥
आक्षेपोत्तरतस्समुद्धृतमथो सत्तत्वनव्योद्धृतं
दासोक्त्यग्निरुचा मुदाज्यकृदभात् सद्दीपसन्दीपकः ॥ १०४ ॥

कल्याणप्रभृतिप्रसिद्धविविधश्रोत्रौघशर्मप्रदैः
रागैर्दासवचांसि सुस्वरमयं गायंस्तदर्थं वदन् ॥
तारं चारुतरस्वरं तदुपसंहारे स धारामरः
कुर्वन् सर्वहृदन्तरिन्दुवदभूद्रत्नाब्धिमुद्रेचयन् ॥ १०५ ॥

स्यात्केषाञ्चन पाटवं प्रवचने किन्त्वत्र नो वर्तते
निर्दुष्टो विषयो हि यत्र विषयो नास्त्यत्र तत्पाटवम् ॥
किन्त्वार्ये द्वयमद्भुतं च मिलितं गानेन साकं ततः
तस्याकर्षकशर्मदप्रवचनं लोकेऽतुलं लक्ष्यते ॥ १०६ ॥

श्रीमद्भागवताटवीं भवरवेस्तापातपं हारितुं
विष्टानामटतां कथाध्वनि सतां श्रीकृष्णकल्पद्रुमम् ॥
आर्ये दर्शयति श्रितास्तरुमिमं बालाः फलं चाबलाः
पुष्पं पुष्परसामृतं भुवि सुराः प्राप्तुं प्रसादाभिधम् ॥ १०७ ॥

वैशम्पायनवर्णितं सुविततग्रन्थं महाभारतं
वैशम्पायनवत्प्रवर्णयति भूदेवोत्तमेऽस्मिन् जनाः ॥
श्रोतारो ददृशुश्च सञ्जय इव क्षिप्रं हि दिव्याक्षिभिः
तस्यास्याभिधदर्पणे बहुविधं युद्धाद्यमद्धा तदा ॥ १०८ ॥

श्रीरामायणवर्णनश्रवणतः पूर्णा जनाः शर्मणा
वक्तारं धरणीसुरं च रुचिरं विद्वद्वरं मेनिरे ॥
आर्यं वानरवर्यमारुतिकृपापीयूषवर्षावृतं
नो चेत्तादृशवर्णनं तु धरणौ कुर्यान्नु को वा नरः ॥ १०९ ॥

गीता भारतसङ्ग्रहेति कथिता तस्याश्च वक्ता तथा
को युष्मास्विति पृच्छति प्रियगुरौ प्रादर्शि येनैतयोः ॥
पर्वाध्यायनवद्वयस्य च मिथः सम्यङ्नवीनान्वयः
तद्गीतामृतपानतस्स्वविहितासक्त्याऽर्जुनोऽभूज्जनः ॥ ११० ॥

श्रुण्वन् श्रीहरिवंशविष्णुमुखसन्नानापुराणादिकं
आचार्येण च वर्णितं जनगणः प्राप्ते समाप्तेर्दिने ॥

---

*११० - **प्रियगुरौ** - श्रीसत्यध्यानतीर्थश्रीचरणे । युष्मास्विति - शिष्येषु मध्य इत्यर्थः ।*

श्वो नैवं भवितेति चिन्तनयुतो म्लानोऽपि तावद्दिने
लब्ध्वा साधु भवौषधं भुवि बभौ साक्षात्परीक्षिन्निभः ॥ १११ ॥

दिव्ये भव्यदरुक्मिणीशविजये काव्येऽथ तद्वर्णिते
सद्वातागमपोषितां सुकवितां दृष्ट्वोत्तमां सूत्रिणीम् ॥
निर्वातागमतः कृशां कुकवितां निस्सूत्रिणीं स्वैरिणीं
दुष्कांक्षाविषयोषिदं परभवां ज्ञात्वा जनोऽद्रावयत् ॥ ११२ ॥

सर्वेषामुपकारिणं हरिकथापीयूषसाराभिधं
दासाधीशजनिं द्विजः कृतिमणिं गायंश्च संवर्णयन् ॥
सत्तत्त्वानि सुबोधयन् सुजनतां सन्तोषयन् दर्शयन्
दासव्यासवचस्सु स स्वपटुतां श्रीसव्यासाचीयते ॥ ११३ ॥

या भूकम्पनिभा कुवेंपुकपिपद्दुर्पादपोत्पाटने
या बेन्द्रेप्रमुखान् चकार विमुखानर्कों यथा चातकान् ॥

---

*११४ - कुवेम्पुनामके कपौ (वौ) श्रीजयतीर्थगुरुं तथा तत्प्रतिपादितं तारतम्यबोधकमध्वसिद्धान्तं अवाच्यवचनैः अन्यायैर्निन्दति सति, माध्वानां महावमानप्रसङ्गे प्राप्ते, लौकिककीर्तिभङ्गभिया तूष्णीं स्थितेषु महत्स्थानसमारूढेषु, वैदिकसन्मार्गसंस्थापनदीक्षितः श्रीआचार्यस्सत्वरं महिषपुरमेत्य तन्निन्दावचनानां सम्यगुत्तरं प्रददत् साहित्यसङ्गीतादिकलाभिः सद्युक्तिसंसिक्तस्वोक्तिभिर्हास्यरसधाराभिश्च लौकिकानामपि हृदयङ्गमतया श्रीमध्वसिद्धान्तोक्ततारतम्यादिप्रमेयसमर्थनं तथा श्रीजयतीर्थगुरुवर्यमाहात्म्यं न्यरूरुपत्। तदा ताडनाय सपाषाणखण्डहस्तमण्डिता मूढपाषण्ढपिण्डा अपि करतालपरित्यक्तशिलाकलाः अमन्दहासखण्डितमौढ्या बभूवुः, कुवेम्पुरपि सकम्पः पलायित इति कथासङ्ग्रहोऽयम् ॥* ***या भूकम्पनिभेति*** *॥*

*बेन्द्रेप्रमुखानिति ॥ द.रा.बेन्द्रे प्रमुखाः सर्वे कन्नडप्रमुखमहाकवयः क्रतुपुरे वीरनारायणदेवस्थानस्य पार्श्वस्थले प्रवर्तितायां गोष्ठ्यां श्रीआचार्यभाषणे कन्नडसाहित्यप्रावीण्यं शृङ्गारहास्यादिरसरञ्जितवाणीलहरीं च संश्रुत्य ''इतः आसममि भवन्त एव भाषणचणाः यतो भवदद्भुतगम्भीरहास्यशृङ्गारादिरस-पूर्णवाणीश्रवणानन्तरं अन्येषां गिरः को वा श्रुणुयात्?'' इति वदन्तः विमुखा अभूवन्नित्यादि कथासङ्ग्रहोऽयम् ॥*

या द्वैतारिदिवाकरादिनुतगोस्वाच्छादनेऽरिप्रभा
भाषापञ्चककाञ्चनाञ्चितरुचा साऽऽचार्यवागर्च्यते ॥ ११४ ॥

श्रुत्या यन्नदगर्जितस्य शिखिनो भूत्वा बभुर्भुसुराः
योषा वैदिकवेषभूषणपणा यद्भाषया चाशुभन् ॥
फुल्लं बालकलोललोककमलं यस्मात्कृतं लीलया
तस्याचार्यवरस्य च प्रवचनं किं वा स्तुवेऽहं जडः ॥ ११५ ॥

आर्यस्येदृशसुन्दरप्रवचसो माहात्म्यमत्यद्भुतं
नूनं तद्धरिभक्तिमात्रसुफलं पाण्डित्यतो नोत्थितम् ॥
स्वस्मिन् यस्य च नास्ति भक्तिरजिते किं शक्नुतेऽयं नरः
स्वान्येषां हरिभक्तिदप्रवचनं कर्तुं धरित्र्यामहो ॥ ११६ ॥

---

*R.R. दिवाकरनामको लौकिकधुरीणः हुबलीनगरे श्रीआचार्यप्रवचनमत्यद्भुतं मध्वसिद्धान्तस्यैव युक्तत्वमिति प्रतिबोधकं श्रुत्वा अन्ते "आचार्यः महान् कलाकारः । अत एव मध्वसिद्धान्तवत् अद्वैतादिपरमतमपि आचार्यप्रवचने सति एवमेव पाराम्यं प्राप्नुयात् । नात्र कस्यचिन्मतस्य श्रेष्ठत्वम् ॥" इति आचार्यस्तवनरूपेण मध्वसिद्धान्तदूषणं चकार । तदा तूर्णमुत्थाय प्रवचने समाप्तेऽपि पुनः प्रवचनं आरभ्य 'सङ्गीतसाहित्यादिसकलकलानां मध्वसिद्धान्तविनियोगेन पारम्यं न तु अन्यथा' इति प्रतिज्ञाय यावद्दिवाकरः क्षमां न याचते तावत्प्रवचनं अनेकघण्टापर्यन्तं निशीथेपि विदधानः श्रीमद्द्वैतमतसमर्थनमकरोदाचार्य इति कथासङ्ग्रहः ॥ या द्वैतारीतिं ॥ अत्र श्लेषश्च ॥ द्वैतस्य - जयद्रथविदारणरूपद्वैतस्य अरिः - शत्रुः यः दिवाकरः R. R- दिवाकरश्च, तस्य नुतगौः स्तुतिरूपवाक्यं प्रकाशश्च, तस्याःसु आच्छादने अरिवत् श्रीकृष्णचक्रवत् प्रभा यस्याः सेति ॥ भाषापञ्चकम् - संस्कृत - कन्नड - हिन्दी - मराठी उर्दू इति । रुचेत्यनन्तरं सहितेति शेषः । अथ वा "टांप चैव हलन्तानां यथा वाचा निशा दिशा" इत्युक्तरीत्या टाबन्तः शब्दोऽयम् ।*

*११५ - धारवाडनगरे १९५२ - १९५४ (क्रिस्ताब्दे) पर्यन्तं प्रवृत्ते महाज्ञानसत्रे धर्मिकप्रश्नोत्तरवेलायां पण्डितैरन्यैर्विद्यार्थिगणकृतप्रश्नानामुत्तरेऽसञ्जाते क्रतुपुराद्रात्रावेव सबहुमानमाहूतस्सन् समागतः श्रीआचार्यः तत्प्रश्नानामुत्तरं यच्छन् प्रवचनकरोत् । तदा सर्वे ५० सङ्ख्याकाः विद्यार्थिप्रभृतयः परदिने शिखामण्डिताः आचार्योत्तरहृदयङ्गमताया अभिव्यक्तिमकुर्वन् । एवमादिकथासङ्ग्रहः* ***श्रुत्येति*** *॥*

वाक्यार्थग्रन्थरत्नप्रणयनविनयालङ्कृतच्छात्रयूथ -
भक्त्युद्रेकप्रदायिप्रवचनविधया सुप्रसिद्धश्चतुर्था ॥
धीरस्यायं विचारः परमतहरणे हर्षणे सज्जनानां
त्रय्याः संसेवने गोक्षुरकर इव भ्राजते श्रीमुरारेः ॥ ११७ ॥

मुक्तीशे तस्य भक्तिं दृढतरमधुरां वच्मि किं यद्बलेन
तस्यासीज्जन्म शुद्धप्रचुरमतिमतासक्तविद्वत्सुवंशे ॥
धीरः श्रीसात्विकार्यो हरिगुरुनिरतः शुद्धिदाता पिताऽभूत्
माता सद्वंशजाता शुभदययमुना वृद्धिदा बुद्धिदाऽभूत् ॥ ११८ ॥

लब्धः सद्ध्यानतीर्थाभिधविबुधपतिः शुद्धकारुण्यमूर्तिः
विश्रान्तोन्दन्तकीर्तिर्नवविफुलमतिर्नाशितस्वाश्रितार्तिः ॥
विश्वग्विद्याप्रदीप्तिः गुरुरपि जयदार्शीर्दसद्वाग्विभूतिः
आर्येणानेन भक्तिद्रुमफलकमलानाथकारुण्यतो हि ॥ ११९ ॥

दुष्टानां दृष्टिकष्टं हरिपदरतिमच्छिष्टनॄणां सदेष्टं
कायायासं सुशर्मप्रदमपि मनसः श्रीशसेवादिरूपम् ॥
तच्चार्वाचारभारं प्रचुरमतिमतं श्रद्धयानुव्रजन्ती
पत्नीपुत्रादिसम्पत् हरिरतिजहरिप्रीतिजाता हि तस्य ॥ १२० ॥

विद्याविद्याप्रदानप्रवचनकविताघोरवाक्यार्थचर्चा -
वादप्रौढप्रबन्धप्रणयनहरिसद्दासवाग्गानरूपः ॥
नानाकारो विचारः परतिमिरहरः धीरमाध्वोक्तिचारः
भक्त्या फल्यप्ययं तद्धरिगुरुचरणाम्भोजभक्तेः फलं हि ॥ १२१ ॥

तीर्थक्षेत्रादियात्राफलमपि सकलं जानकं नैव मे स्यात्
दुर्वादारिप्रदारिप्रथितकृतिततिर्दक्षिणा स्याद्गुरूणाम् ॥
इत्थं सद्भावनावान् हरिगुरुचरणे यादृशीं भक्तिमाप्नोत्
एवं वक्तुं न वक्त्रं प्रभवति मम किं त्वं च मे स्यात्समानः ॥ १२२ ॥

निर्यातो ब्रह्मरन्ध्रात् विबुधगणमणेः सात्विकार्यस्य सूनुः
ध्यात्वा तीर्थेश्वरश्रीपतिमथ सुतनुं त्यक्तवत्या जनन्याः ॥
देहं त्यक्त्वाऽऽप देवं वसनवदिति तद्भक्तिशक्तिं व्यनक्ति
नृणामन्ते हि भक्तिर्भवति यदि सदा भक्तिरीशे विशुद्धा ॥ १२३ ॥

आयान्तं वेङ्कटेशं तिरुपतिपुरतो वीक्षमाणस्तुवानः
स्वोपास्याश्वास्यपूजाकृदमलदिवसे दिव्यगीताजयन्त्याम् ॥
एकादश्यां त्यजन् स स्वतनुमथ गतो व्यासदेवस्य वासं
रेजे धन्याग्रगण्यः सुमहितचरितः सच्छ्रितः श्रीनिवासः ॥ १२४॥

नमस्ते प्राणेशप्रियकुलजने सात्विकसुत
नमस्ते ध्यानार्यप्रियजयदवाक्कार्यलसित ॥
नमस्ते विध्वस्ताखिलकुमत माध्वागमरत
नमः श्रीवासार्य प्रदिश सुदृशं साधुमहित ॥ १२५ ॥

इति निगदितवन्तः सर्वभूदैवतेन्द्राः
गुरुवरपदसक्ताः भक्तिपीयूषसिक्ताः ॥
हृदि धृतगुरुरूपा नेमुरेनं विपापाः
हरिगुरुदयिताग्र्यं श्रीनिवासाभिधार्यम् ॥ १२६ ॥

---

*१२३ - **निर्यात** इति षष्ठी । अद्भुतरीत्या देहोत्क्रमणशालिनोर्मातापित्रोः पुत्रः श्रीआचार्यस्तथैव स्वदेहं त्यक्तवानिति भावः ॥*

*१२४ - १९८० (क्रिस्ताब्दे) रोद्रिसंवत्सरस्य मार्गशीर्षशुद्धाष्टम्यां रात्रौ श्रीआचार्याः "कुलदैवतं श्रीश्रीनिवासः आगतोस्ति। द्वारं उद्घाटयत" इति उच्चैस्स्वशिष्यान् वदन्तः, शिष्यैरदृष्टभगवद्रूपैस्तथा कृते सति, घटिकाद्वयपर्यन्तं नखाशिखान्तं श्रीवेङ्कटेशं अपरोक्षीकृत्य स्वीयनव्यतत्कालकलितश्लोकसङ्कुलैस्तुवानाः, ततः दशम्यां सायङ्काले एकादशीतिथिसमागमे सति दिव्यगीताजयन्तीयोगे स्वोपस्याश्वास्यं पूर्वं पूजितवतः श्रीसत्यनाथतीर्थश्रीचरणानामाराधनदिनसन्निधाने सति स्वतनुं तत्यजुरिति कथा । स्वशिष्यान् प्रत्याचार्यः 'वयमिदानीं बदरीं प्रति गच्छाम' इति अकथयन्निति **व्यासदेवस्य** वासमित्युक्तम् ॥*

कुवाक्पङ्कानर्थक्षयदसुखतीर्थान्वयजनेः
पितुश्शास्त्रच्छात्रप्रवचनकृतो भक्तिसुधया ॥
विचारश्रीवाचा रुचिररचिताचार्यशतक -
त्रये व्यासस्यान्त्यं भवतु हृदयात्यन्तरुचिरम् ॥ १२७ ॥

## इति श्री रुचिराचार्यनामकेन बालकेन विरचिते आचार्यशतकत्रये

## तृतीयं अन्तिमं च विचारशतकं

## समाप्तम्

**॥ श्रीकृष्णार्पणमस्तु ॥**

**॥ मध्वेशार्पणमस्तु ॥ श्रीरस्तु ॥**



*१२७ - तीर्थेन पङ्कानर्थपरिहारवत् सुखतीर्थेन कुवादानर्थक्षय इति भावः । तादृशसुखतीर्थवति अन्वये जनिर्यस्य तस्येत्यर्थः । तथा तीर्थान्वयः - तीर्थाचार्य इति वंशः तत्र जनिमत इत्यर्थोऽपि ग्राह्यः । श्रीव्यासदेवशिष्यश्रीसुखतीर्थसच्छास्त्रपानरतस्य सच्छास्त्रोदितवर्त्मना विचाराचारशीलस्य पितुः विचारसम्पद्विषयकवाक्प्रभावेण रुचिररचितमिदं तादृशव्यासदेवहृदयस्य अत्यन्तरुचिरं अतिवल्लभं भवत्विति अर्थपूर्णा हि प्रार्थना ॥*

**॥ मध्वेशार्पणमस्तु ॥ श्रीरस्तु ॥**

॥ ಶ್ರೀಃ ॥

ಶ್ರೀ ಗುರುರಾಜೋ ವಿಜಯತೇ

# ಆಚಾರ್ಯಶತಕತ್ರಯಮ್

## ಕಥಾ ಶತಕಮ್

**ಶ್ರೀಕೃಷ್ಣಪ್ರತತಾಸಿತಾಂಘ್ರಿಗಗನೋದ್ಯಾನಪ್ರಸೂನಂ ನಖಂ**
**ಶೀರ್ಷಾಲೇ ಶ್ರಯ ಮೋಕ್ಷಮಾಕ್ಷಿಕಸರೋ ರಕ್ತಂ ವಿರಕ್ತಪ್ರಿಯಮ್ ॥**
**ಯತ್ಸಂಯೋಗತ ಏವ ಗೌರಗಿರಿರಾಟ್‌ಶೀರ್ಷಂ ತುಷಾರಾಂಶುಮತ್**
**ಗಂಗಾವಚ್ಚ ಸದಾರುಣಂ ನ ತು ಸಿತಂ ಸತ್ಯಾಶ್ಚ ಚಿಂತಾಯುತಮ್** ॥ ೧ ॥

ಹೇ ಶಿರಸ್ಸೆಂಬುವ ದುಂಬಿಯೇ ! ಶ್ರೀಕೃಷ್ಣ ಪರಮಾತ್ಮನ ವ್ಯಾಪ್ತವೂ ನೀಲಕಾಂತಿ ಸಂಪನ್ನವೂ ಆದ ಪಾದವೆಂಬ ಆಕಾಶದ ಉದ್ಯಾನದಲ್ಲಿ ಹೂವಿನಂತಿರುವ ಉಗುರನ್ನು ಆಶ್ರಯಿಸು. ಈ ನಖಕುಸುಮವು ಮೋಕ್ಷವೆಂಬ ಜೇನುತುಪ್ಪದ ಸರೋವರದಲ್ಲಿದೆ. ಇದು ರಕ್ತವಾಗಿದ್ದರೂ ವಿರಕ್ತರಿಗೆ ಬಹಳ ಪ್ರಿಯವಾಗಿದೆ. ಅದು ಎಷ್ಟು ರಕ್ತ (ಕೆಂಪು)ವಾಗಿದೆಯೆಂದರೇ - ಅದರ ಸಂಬಂಧಮಾತ್ರದಿಂದ, ಬೆಳ್ಳನೆಯ ಪರ್ವತಕ್ಕೆ (ಹಿಮಾಲಯಕ್ಕೆ) ಒಡೆಯನಾದ ಸ್ವತಃ ಬೆಳ್ಳಗಿರುವ ಶ್ರೀ ಮಹರುದ್ರದೇವರ ಶಿರಸ್ಸು, ಹಿಮದಂತೆ ಬೆಳ್ಳಗೆ ಹಾಗು ತಣ್ಣಗೆ ಕಾಂತಿಯುಳ್ಳ ಚಂದ್ರನನ್ನು ಮತ್ತು ಗಂಗೆಯನ್ನು ಹೊತ್ತಿದ್ದರೂ, ಮಿಗಿಲಾಗಿ ಸತೀದೇವಿಯ ಚಿಂತಾಕ್ರಾಂತವಾಗಿದ್ದರೂ ಸಹ ನಿತ್ಯವೂ ಕೆಂಪಾಗಿದೆಯೇ ಹೊರತು ಬೆಳ್ಳಗೆ ಆಗಲೇ ಇಲ್ಲ.

**ಸೀತಾನಾಥಪದಾನತಂ ಸುರನುತಂ ದಿವ್ಯಾಕೃತಿಂ ಮಾರುತಿಂ**
**ಶ್ರೀಕೃಷ್ಣಪ್ರಿಯಮಾತ್ರದೀಕ್ಷಿತಮತಿಂ ಭೀಮಂ ಚ ಕೃಷ್ಣಾಪತಿಮ್ ॥**
**ವ್ಯಾಸಾಂತೇನಿವಸಂತಮದ್ಭುತಕೃತಿಂ ವಿಧ್ವಸ್ತದುರ್ಭಾರತಿಂ**
**ವಂದೇಽಮಂದಮತಿಂ ಯತಿಂ ಚ ಜಗತಾಮಾಚಾರ್ಯವರ್ಯಂ ಗುರುಮ್** ॥೨॥

ಸೀತಾ ದೇವಿಗೆ ನಾಥನಾದ ಶ್ರೀರಾಮಚಂದ್ರದೇವರ ಪಾದಗಳಿಗೆ ನಮಿಸುವ, ದೇವತೆಗಳಿಂದ ಸ್ತುತ್ಯರಾದ, ದಿವ್ಯವಾದ ಆಕಾರವುಳ್ಳ ವಾಯುಪುತ್ರ ಹನುಮಂತದೇವರನ್ನು, ಶ್ರೀಕೃಷ್ಣನಿಗೆ ಪ್ರಿಯವಾದುದನ್ನು ಮಾಡಲು ಮಾತ್ರ ದೀಕ್ಷಿತವಾದ ಮತಿಯುಳ್ಳ, ಕೃಷ್ಣೆಗೆ (ದ್ರೌಪದಿಗೆ) ಪತಿಯಾದ ಶ್ರೀಭೀಮಸೇನ ದೇವರನ್ನು, ಮತ್ತು ಶ್ರೀ ವೇದವ್ಯಾಸದೇವರ ಶಿಷ್ಯರಾದ ಅದ್ಭುತಗ್ರಂಥಗಳನ್ನು ನೀಡಿದ, ದುರ್ಮತಗಳನ್ನು ವಿಧ್ವಂಸಗೊಳಿಸಿದ, ಜಗತ್ತಿಗೆ ಆಚಾರ್ಯವರ್ಯರೂ ಗುರುಗಳೂ ಆದ, ಯತಿಗಳಾದ ಶ್ರೀ ಪೂರ್ಣಪ್ರಜ್ಞಾಚಾರ್ಯರನ್ನು (ನಾನು) ವಂದಿಸುತ್ತೇನೆ.

ಯಸ್ಮಿನ್ ಪಂಕಜನಾಭದೈವತಗುರುಷ್ಟೀಕಾಕೃದಿಂದ್ರಸ್ತಥಾ
ಬ್ರಹ್ಮಣ್ಯಾರ್ಯರವಿಶ್ಚ ವಿದ್ವದುಡುಪೋ ವ್ಯಾಸಾಭಿಧಶ್ಚಂದ್ರಮಾಃ ॥
ರಾರಾಜೀತಿ ರಘೂತ್ತಮಾಪ್ಪತಿರಥ ಶ್ರೀವಾದಿರಾಜದ್ಯುರಾಟ್ -
ಸೋದರ್ಯೋ ಗುರುರಾಘವೇಂದ್ರಧನದಸ್ತದ್ರಾಜ್ಯಮಾರಾಜತೇ ॥ ೩ ॥

ಶ್ರೀ ಮಧ್ವ ಸಿದ್ಧಾಂತ ಸಾಮ್ರಾಜ್ಯವು ದೇವತಾಸಾಮ್ರಾಜ್ಯದಂತೆ ವಿರಾಜಿಸುತ್ತಿದೆ. ಈ ದೇವಸಾಮ್ರಾಜ್ಯದಲ್ಲಿ ಶ್ರೀ ಪದ್ಮನಾಭತೀರ್ಥರೇ ದೇವಗುರುಗಳಾದ ಬೃಹಸ್ಪತ್ಯಾಚಾರ್ಯರು. ಶ್ರೀ ಟೀಕಾಚಾರ್ಯರೇ ಇಂದ್ರದೇವರು. ಶ್ರೀ ಬ್ರಹ್ಮಣ್ಯತೀರ್ಥರೇ ಸೂರ್ಯದೇವ. ವಿದ್ವಾಂಸರೆಂಬ ನಕ್ಷತ್ರಮಂಡಲಕ್ಕೆ ಒಡೆಯರಾದ ಶ್ರೀ ವ್ಯಾಸತೀರ್ಥರೇ ಚಂದಿರ. ಶ್ರೀ ರಘೂತ್ತಮಮುನಿಗಳು ವರುಣದೇವರು. ಶ್ರೀ ವಾದಿರಾಜತೀರ್ಥರೇ ಅಲ್ಲಿ ಉಪೇಂದ್ರ. ಶ್ರೀ ರಾಘವೇಂದ್ರ ಗುರುಸಾರ್ವಭೌಮರೇ ಧನ ನೀಡುವ ಕುಬೇರನಂತೆ ಇದ್ದಾರೆ.

ಮಾಧ್ವಗ್ರಂಥಮುಕುಂದಮದ್ಭುತಗುಣಂ ಟೀಕಾರಮೋಲ್ಲಾಸಿನಂ
ಸಂಸ್ಥಾಪ್ಯಾಶು ಮನೋರಥೇಷು ಸುಧೃಶಾಮಾಸೇತುಶೈತ್ಯಾಚಲಮ್ ॥
ಯೋ ದಿವ್ಯೋರುರಥೋತ್ಸವಂ ಚ ಕೃತವಾನ್ ಕೃತ್ವಾ ಕುವಾದಂ ಬಲಿಂ
ಸತ್ಯಧ್ಯಾನಯತಿಃ ಕೃತೀಶ್ವರಪತಿರ್ಮಾಂ ಪಾತು ದತ್ವಾ ಮತಿಮ್ ॥ ೪ ॥

ಜಯತೀರ್ಥವರ್ಯರ ಟೀಕಾ ಎಂಬ ರಮಾದೇವಿಯಿಂದ ಸಹಿತನಾದ, ಅದ್ಭುತಗುಣಸಂಪನ್ನನಾದ ಮಾಧ್ವಗ್ರಂಥವೆಂಬ ಮುಕುಂದನನ್ನು, ಒಳ್ಳೆ ಬುದ್ಧಿವಂತರ ಮನೋರಥಗಳಲ್ಲಿ ಇಟ್ಟು, ಆಸೇತುಹಿಮಾಚಲ ಪರ್ಯಂತ ದುರ್ಮತಗಳನ್ನು ಬಲಿಯನ್ನಾಗಿ ನೀಡಿ, ಉತ್ತಮವಾದ ದಿವ್ಯವಾದ ರಥೋತ್ಸವವನ್ನು ಮಾಡಿದ, ವಿದ್ವಚ್ಚಕ್ರವರ್ತಿಯಾದ ಶ್ರೀಸತ್ಯಧ್ಯಾನತೀರ್ಥರೆಂಬ ಯತಿಗಳು ಒಳ್ಳೆಯ ಮತಿಯನ್ನು ನೀಡಿ ನನ್ನನ್ನು ರಕ್ಷಿಸಲಿ.

ಟೀಕಾಮಾಧ್ವರಥೋತ್ಸವಸ್ಯ ಸರಣೌ ಕೀರ್ಣಾನ್ ಖಲೈಃ ಕಂಟಕಾನ್
ದೋಷಾಖ್ಯಾಂಶ್ಚ ಹರನ್ ಕೃತಾರ್ಥಮಕರೋದ್ಯೋ ಜಾಲಿಹಾಳಾಹ್ವಯಮ್ ॥
ತಂ ಶ್ರೀಮದ್ಗುರುರಾಜಜಾತಮಜಿತಂ ಧ್ಯಾನಾರ್ಯಶಿಷ್ಯಾಗ್ರಿಯಂ
ಆಚಾರ್ಯಂ ಪರಮಂ ಪರೌಘಜಯಿನಂ ಮಾತಾಮಹಂ ನೌಮ್ಯಹಮ್ ॥ ೫ ॥

ಟೀಕಾ ಹಾಗೂ ಮಾಧ್ವಗ್ರಂಥಗಳ ರಥೋತ್ಸವದ ಹಾದಿಯಲ್ಲಿ ದುಷ್ಟರಿಂದ ಹರಡಿಡಲ್ಪಟ್ಟ ದೋಷವೆಂಬ ಮುಳ್ಳುಗಳನ್ನು ಪರಿಹರಿಸುತ್ತಾ ಯಾರು ಜಾಲಿಹಾಳ ಎಂಬ ಹೆಸರನ್ನು ಸಾರ್ಥಕವನ್ನಾಗಿ ಮಾಡಿದರೋ. ಅಂತಹ ಶ್ರೀಯುತ ಗುರುರಾಜಾಚಾರ್ಯರ ಪುತ್ರರಾದ, ಅಜೇಯರಾದ, ಸತ್ಯಧ್ಯಾನತೀರ್ಥರ ಶಿಷ್ಯಾಗ್ರೇಸರರಾದ, ಪರಮಾಚಾರ್ಯರಾದ, ಪರವಾದಗಳನ್ನು ಗೆಲ್ಲುವ, ಮಾತಾಮಹರನ್ನು ನಾನು ವಂದಿಸುತ್ತೇನೆ.

ಬಾಣಾಕಾರಪುರೋತ್ಥಿತಃ ಪರಹೃದೋ ಬಾಣಾಯಿತೋ ಭೂಸುರಃ
ಸುಬ್ಬಣ್ಣಾರ್ಯಸುತೋ ಜಗತ್ಸುಮಹಿತಃ ಶ್ರೀನಾಥಸೇವಾರತಃ ॥
ಧ್ಯಾನಾರ್ಯಪ್ರಿಯಜಾಲಿಹಾಳಬುಧರಾಟ್‌ಶಿಷ್ಯಾಗ್ರಿಯೋ ಭಾತಿ ಯಃ
ತಾತಂ ತಂ ಪ್ರಣಮಾಮಿ ಸಂತತಮಹಂ ಸರ್ವಾತ್ಮನಾ ರಕ್ಷಕಮ್ ॥ ೬ ॥

ಬಾಣಾಕಾರ ಕ್ಷೇತ್ರದಲ್ಲಿ (ಬಾಳಗಾರಿನಲ್ಲಿ) ಹುಟ್ಟಿದ, ಪರವಾದಿಗಳಿಗೆ ಬಾಣದಂತಿರುವ ಬ್ರಾಹ್ಮಣರಾದ, ಸುಬ್ಬಣ್ಣಾಚಾರ್ಯರ ಪುತ್ರರಾದ, ಜಗತ್ತಿನಲ್ಲಿ ಪ್ರಸಿದ್ಧರಾದ, ಶ್ರೀನಾಥನ ಸೇವೆಯಲ್ಲಿ ಆಸಕ್ತರಾದ, ಶ್ರೀಸತ್ಯಧ್ಯಾನತೀರ್ಥರಿಗೆ ಪ್ರಿಯರಾದ ಪಂಡಿತರಾಜ ಶ್ರೀಜಾಲಿಹಾಳಾಚಾರ್ಯರ ಶಿಷ್ಯಶ್ರೇಷ್ಠರಾದ, ಎಲ್ಲ ವಿಧದಿಂದಲೂ ರಕ್ಷಕರಾದ, ಪೂಜ್ಯ ತಂದೆಯವರನ್ನು ನಾನು ಸಂತತ ನಮಸ್ಕರಿಸುತ್ತೇನೆ.

ವಿಜ್ಞಾನಾಯ ವಿನಾಶನಾಯ ವಿಮತೇರ್ವಿಷ್ಣೌ ಸದಾ ಭಕ್ತಯೇ
ವಿಷ್ಣುಪ್ರೇಷ್ಠಗುರುಪ್ರಸಾದಮಧಿಕಂ ಸಂಲಬ್ಧುಕಾಮೋಽಧುನಾ ॥
ತಾತಾಸ್ಯಪ್ರಸರತ್ಸುವರ್ಣರಸ ಸಂಪೂರ್ಣಪ್ರಧೀಲೇಖನೀ -
ಸಾಹಾಯ್ಯೇನ ಲಿಲೇಖಿಷಾಮಿ ಕಿಮಪಿ ಸ್ತೋತ್ರಂ ಗುರೂಣಾಮಹಮ್ ॥ ೭ ॥

ವಿಶೇಷ ಜ್ಞಾನಕ್ಕಾಗಿ, ಅಜ್ಞಾನದ ಪರಿಹಾರಕ್ಕಾಗಿ, ವಿಷ್ಣುವಿನಲ್ಲಿ ಸದಾ ಭಕ್ತಿಗಾಗಿ ವಿಷ್ಣುವಿಗೆ ಪ್ರಿಯರಾದ ಗುರುಗಳ ಅನುಗ್ರಹವನ್ನು ಬಹಳವಾಗಿ ಹೊಂದಲು ಇಚ್ಛೆಯುಳ್ಳವನಾಗಿ, ಈಗ, ತಂದೆಗಳ ಮುಖದಿಂದ ಪ್ರವಹಿಸುವ ಸುವರ್ಣ (ಉಪದೇಶ) ವೆಂಬ ಸುವರ್ಣ (ಬಂಗಾರ)ದ ರಸದಿಂದ (ಮಸಿಯಿಂದ) ತುಂಬಿದ ಬುದ್ಧಿಯೆಂಬ ಲೇಖನಿಯ ಸಹಾಯದಿಂದ ನಾನು ಗುರುಗಳ ಸ್ತೋತ್ರವನ್ನು ಕಿಂಚಿತ್ ಬರೆಯಲಿಚ್ಛಿಸುತ್ತಿದ್ದೇನೆ.

ಪ್ರಾಮಾಣ್ಯಂ ಯದಿ ವರ್ತತೇ ವಿವರಣೇ ಮೂಲೇಽಪಿ ಯದ್ವತ್ತಥಾ
ತಸ್ಯಾರ್ಯಸ್ಯ ಚ ಸಾತ್ವಿಕಾರ್ಯಜನುಷೋ ಮಾತಾಮಹಸ್ಯಾಪಿ ಮೇ ॥
ಸ್ತೋತ್ರೇ ಸರ್ವಗುರುಪ್ರಬರ್ಹಮಧುರಸ್ತೋತ್ರಂ ಭವೇದಿತ್ಯತಃ
ಆಚಾರ್ಯಂ ಗುರುವೈಭವಾಮೃತರತಂ ಸಂವರ್ಣಯೇ ಸಾಂಪ್ರತಮ್ ॥ ೮ ॥

ವ್ಯಾಖ್ಯಾನದಲ್ಲಿ ಪ್ರಾಮಾಣ್ಯವಿದ್ದರೆ ಮೂಲದಲ್ಲಿ ಪ್ರಾಮಾಣ್ಯವು ಇದ್ದೇ ಇರುತ್ತದೆಯೆಂಬುದು ಹೇಗೋ, ಹಾಗೆ ನನ್ನ ಮಾತಾಮಹರಾದ, ಸಾತ್ವಿಕಾಚಾರ್ಯರ ಪುತ್ರರಾದ ಪರಮ ಪೂಜ್ಯ ಶ್ರೀ ಜಾಲೀಹಾಳಾಚಾರ್ಯರ ಸ್ತೋತ್ರವನ್ನು ಮಾಡಿದರೆ ಅವರಿಗೆ ಮೂಲರಾದ ಸಕಲಗುರುವರ್ಯರ ಸ್ತೋತ್ರವು ಮಾಡಿದಂತಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಗುರುವೈಭವವೆಂಬ ಅಮೃತರಸದಲ್ಲಿ ನಿರತರಾದ ಶ್ರೀ ಜಾಲಿಹಾಳ ಆಚಾರ್ಯರನ್ನು ಈಗ ವರ್ಣಿಸುತ್ತೇನೆ.

ಸಂತಾಪತ್ರಯಹಾರಿಚಾರುಚರಿತಬ್ರಹ್ಮಾಂಡಮಸ್ಯಾದ್ಭುತಂ
ವ್ಯಾಪ್ತುಂ ಶುಭ್ರಕಥಾಸದಾಚರಣಧೀಕಾರ್ಯಾಖ್ಯಲೋಕತ್ರಯಮ್ ॥
ಸಂವೃತ್ತಂ ಮತಿವಾಮನಂ ಗತಪದಂ ಕ್ಷಾಮ್ಯಂತು ಸಂತೋಽಥ ಮಾಂ
ಕುರ್ವೀರನ್ ಕೃಪಯಾ ತ್ರಿವಿಕ್ರಮಕೃಪಾಸದ್ಯಾನಪಾತ್ರಂ ಸದಾ ॥ ೯ ॥

ಈ ಶ್ರೀ ಆಚಾರ್ಯರ ಚರಿತ್ರೆ ದೊಡ್ಡ ಬ್ರಹ್ಮಾಂಡದಂತಿದೆ. ಅದ್ಭುತವಾಗಿದೆ. ಸುಂದರವಾಗಿದೆ. ತಾಪತ್ರಯವನ್ನು ಪರಿಹರಿಸುವ ಅವರ ಕಥಾ ಸದಾಚಾರ ವಿಚಾರಗಳೇ ಅದರೊಳಗಿರುವ ಮೂರು ಲೋಕಗಳು. ಇಂತಹ ಬ್ರಹ್ಮಾಂಡವನ್ನು ಮತಿಯಿಂದ ವಾಮನ (ಅಲ್ಪ) ನಾದ ನಾನು ವ್ಯಾಪಿಸಲು ಪ್ರವೃತ್ತನಾಗಿರುವೆ. ಆ ವಟುವಾಮನನಂತೆ. ಆದರೆ ಆ ವಾಮನನಿಗೆ ಕಾಲಿವೆ ನನಗೆ ಪದಗಳೇ ಇಲ್ಲ. ಆದ್ದರಿಂದ ನನ್ನನ್ನು ಸಜ್ಜನರು ಅಪಹಾಸಮಾಡದೇ ಕ್ಷಮಿಸಲಿ. ಹಾಗೆಯೇ ತ್ರಿವಿಕ್ರಮರೂಪಿಯಾದ ಶ್ರೀ ಹರಿಯ ಕೃಪೆಯೆಂಬ ಒಳ್ಳೆಯ ವಾಹನವು ನನಗೆ ದೊರಕುವಂತೆ ಅನುಗ್ರಹಿಸಲಿ. ಅದರ ಸಹಾಯದಿಂದ ಈ ಬ್ರಹ್ಮಾಂಡವನ್ನು ನಾನು ವ್ಯಾಪಿಸಲು ಪ್ರಯತ್ನಿಸಬಹುದು.

ಚಿತ್ರೇ ಯಚ್ಚರಿತೇಽಖಿಲತ್ರ ಮಿಲಿತಂ ಸತ್ಸಂಸ್ತುತಂ ಸತ್ಕಥಾ -
ಶುಭ್ರಾಚಾರವಿಚಾರರೂಪಮತುಲಂ ದುರ್ಲಭ್ಯಮಂಗತ್ರಯಮ್ ॥
ತ್ರೇಧಾ ತಚ್ಚರಿತೇ ವಿಭಕ್ತಿರಪಿ ಮೇ ದೋಷಾವಹಾ ನೋ ಭವೇತ್
ವಿಷ್ಣೋ ರೂಪಗಣೇ ಬಲಾದಿವಿಧಯಾ ಭಾಗೋ ವಿಶೇಷಾದಿವ ॥ ೧೦ ॥

ಆ ಆಚಾರ್ಯರ ಚರಿತ್ರೆ ಅದ್ಭುತವಾಗಿದೆ. ಅದರಲ್ಲಿ ಎಲ್ಲೆಡೆಯೂ ಕಥಾ ಸದಾಚಾರ ವಿಚಾರವೆಂಬ ಮೂರು ಅಂಶಗಳು ಅನ್ಯೋನ್ಯವಾಗಿ ಸಮ್ಮಿಲಿತವಾಗಿವೆ. ಆ ಅಂಶಗಳು (ಸಾಮಾನ್ಯವಾದವುಗಳಲ್ಲ) ಬಹಳ ದುರ್ಲಭವಾಗಿವೆ. ಸಜ್ಜನರಿಂದ ಸಂಸ್ತುತ್ಯವಾಗಿವೆ. ಇಂತಹ ಅಂಶಗಳು ಎಲ್ಲೆಡೆಯೂ ದೊರೆಯುವ ಈ ಆಚಾರ್ಯರ ಚರಿತ್ರೆಯಲ್ಲಿ ಮೂರು ವಿಧವಾಗಿ (ಕಥಾ, ಸದಾಚಾರ, ವಿಚಾರ, ಶತಕ ಎಂದು) ವಿಭಾಗಿಸುವುದು ತಪ್ಪಾಗಿ ಕಾಣಬಹುದು. ಆದರೆ ವಿಷ್ಣುವಿನ ಅವತಾರಗಳಲ್ಲಿ ಎಲ್ಲದರಲ್ಲಿಯೂ ಜ್ಞಾನ ಬಲಾದಿಗಳು ಸಮವಾಗಿದ್ದರೂ, ಶ್ರೀವ್ಯಾಸಾವತಾರ ಜ್ಞಾನಾವತಾರ, ರಾಮಕೃಷ್ಣಾದ್ಯವತಾರಗಳು ಬಲಾವತಾರವೆಂದು ಒಂದು ವಿಶೇಷದಿಂದ ವಿಭಾಗಿಸುವಂತೆ ಶ್ರೀ ಆಚಾರ್ಯರ ಚರಿತ್ರೆಯನ್ನು ಕಥಾಶತಕ - ಆಚಾರಶತಕ - ವಿಚಾರಶತಕಗಳೆಂದು ವಿಭಾಗಿಸಿ ವರ್ಣಿಸಲು ಹೊರಟಿರುವುದು ತಪ್ಪಾಗುವುದಿಲ್ಲ.

ಬಾಲಾ ಮತ್ಯಬಲಾ ಕಥಂ ಕೃತಿಸುತಂ ಸೋತೇತಿ ಚಿಂತಾ ತು ನೋ
ಪಿತ್ರಾಖ್ಯಾತ್ರಿಸುಪುತ್ರಮಂತ್ರಬಲತಃ ಕುಂತೀವ ಸಾ ಸೋಷ್ಯತೇ ॥
ಕಿಂತ್ವೇತಚ್ಚರಿತೇಽಸ್ಮಿ ನ ಯಾತು [illegible]
ಶ್ರೀಪ್ರಾಣಪ್ರಿಯಕೃಷ್ಣಸಾರಥಿರಿವ ಪ್ರಾಪ್ನೋತು ಸತ್ಸಂಸ್ತುತಮ್ ॥ ೧೧ ॥

"ಈ ಮತಿಯೆಂಬ ಅಬಲೆ, ಇನ್ನೂ ಬಾಲೆ. ಇವಳು ಒಳ್ಳೆಯ ಗ್ರಂಥವೆಂಬ ಪುತ್ರನನ್ನು ಹೇಗೆ ಹಡೆಯುವಳು?" ಎಂಬ ಚಿಂತೆ ನನಗಿಲ್ಲ. ನನ್ನ ತಂದೆಗಳೆಂಬ ಅತ್ರಿಪುತ್ರರ (ಶ್ರೀ ದೂರ್ವಾಸಮಹರ್ಷಿಗಳ) ಮಂತ್ರೋಪದೇಶದಿಂದ ಈ ಮತಿಯೆಂಬ ಅಬಲೆ ಬಾಲೆಯಾದರೂ ಕುಂತಿಯಂತೆ ಗ್ರಂಥಪುತ್ರನನ್ನು ಹಡೆಯುತ್ತಾಳೆ. ಆದರೆ, ಇವಳಿಂದ ಹುಟ್ಟಿದ ಈ ಗ್ರಂಥರಾಜನು ರಾಧೇಯ (ಕರ್ಣ) ನಂತೆ ಲೋಕಪ್ರಸಿದ್ಧಿಯನ್ನು ಪಡೆಯುವುದು ಬೇಡ. ಕಿಂತು ಶ್ರೀ ಪ್ರಾಣ (ಭೀಮ) ಪ್ರಿಯನಾದ ಕೃಷ್ಣನನ್ನು ಸಾರಥಿಯನ್ನಾಗಿ ಹೊಂದಿದ ಅರ್ಜುನನಂತೆ ಸಜ್ಜನರ ಪ್ರಶಂಸೆಯನ್ನು ಹೊಂದುವಂತಾಗಲಿ.

**ಪುರಾ ಗೋದಾತೀರೇ ವಿಬುಧನಿಕರೇ ಪೈಠಣಪುರೇ -**
**ಽವಸತ್ತಿಮ್ಮಣ್ಣಾಖ್ಯೋ ಮತಿಸಮಿತವಿಖ್ಯಾತಿಲಸಿತಃ ॥**
**ರಘುಶ್ರೇಷ್ಠಪ್ರಖ್ಯಾನುತಯತಿವರಾಖ್ಯಾಖಿಲವಿದಾ**
**ಜಿತಃ ಶಿಷ್ಯೋ ಯೋಽಭಾಲ್ಲಿಕುಚಕವಿವತ್ ಕೌಶಿಕವರಃ ॥ ೧೨ ॥**

ಹಿಂದೆ ಗೋದಾವರೀ ನದಿಯ ತೀರದಲ್ಲಿರುವ ಪೈಠಣ ಎಂಬ ಪಟ್ಟಣದಲ್ಲಿ ಶ್ರೀ ತಿಮ್ಮಣ್ಣಭಟ್ಟರೆಂಬ ಬ್ರಾಹ್ಮಣರಿದ್ದರು. ಅವರು ಪಂಡಿತರಿಂದ ತುಂಬಿದ ಈ ಊರಿನಲ್ಲಿ ಬುದ್ಧಿವಂತಿಕೆಯ ಪ್ರಸಿದ್ಧಿಯಿಂದ ವಿರಾಜಿಸುತ್ತಿದ್ದರು. ಶ್ರೀರಘೂತ್ತಮಯತಿವರ್ಯರಿಂದ ವಾದದಲ್ಲಿ ಪರಾಜಿತರಾದ ಕೌಶಿಕ ಗೋತ್ರದ ಆ ಬ್ರಾಹ್ಮಣರು, ಶ್ರೀ ಪೂರ್ಣಪ್ರಜ್ಞಾಚಾರ್ಯರಿಂದ ಪರಾಭವಗೊಂಡ ಲಿಕುಚ ಕವಿಗಳಾದ ತ್ರಿವಿಕ್ರಮಪಂಡಿತಾಚಾರ್ಯರಂತೆ ಶಿಷ್ಯರಾಗಿ ಅವರ ವಿಶಿಷ್ಟ ಶಿಷ್ಯರಾಗಿದ್ದರು.

**ತದತುಲಕುಲಕೀಲಾಲಾಯಯೇಽಥ ಪ್ರಭೂತಃ**
**ಶುಭಗುಣಗಣಸಾಂದ್ರೋಽನಂತಭಟ್ಟಾಖ್ಯಚಂದ್ರಃ ॥**
**ಹರಿಗುರುವಚನಾನಾಂ ಟಿಪ್ಪಣೀ ಚಂದ್ರಿಕಾಭಾ**
**ಕಲಯತಿ ಖಲು ಸತ್ಯಂ ಚಂದ್ರವಾಚಂ ಯದುತ್ಥಾ ॥ ೧೩ ॥**

ಕಾಲಕ್ರಮದಲ್ಲಿ ಆ ತಿಮ್ಮಣ್ಣಭಟ್ಟರ ಅಸದೃಶವಾದ ವಂಶವೆಂಬ ಸಮುದ್ರದಲ್ಲಿ ಒಳ್ಳೆಯ ಗುಣಗಳ ಮೂರ್ತಿಯಾದ ಶ್ರೀಅನಂತಭಟ್ಟರೆಂಬ ಚಂದ್ರನು ಉದಯಿಸಿದ್ದನು. ಅವರು ಹರಿಗುರುಗಳ ವಚನಗಳಿಗೆ ಚಂದ್ರಿಕೆಯಂತಿರುವ ಟಿಪ್ಪಣಿಗಳನ್ನು ನಿರ್ಮಿಸಿದ್ದರಿಂದ ಅವರನ್ನು ಚಂದ್ರನೆಂದು ಕರೆಯುವುದು ಸತ್ಯವೇ ಆಗುತ್ತದೆ. (ಅವರು ರಚಿಸಿದ ಹರಿಗುರುಗಳ ವಚನಗಳ ಟಿಪ್ಪಣಿಗಳು ಅವರನ್ನು ಚಂದ್ರನೆಂದು ಕರೆಯುವುದನ್ನು ಸತ್ಯವನ್ನಾಗಿಸುತ್ತದೆ ಎಂದು ಭಾವ).

**ವ್ಯಾಪ್ತೇಽಥ ಪೈಠಣಪುರೋತ್ಥಿತವಂಶವೃಕ್ಷೇ**
**ಆಹೂನುಗುಂದಮಭವದ್ಗುರುರಾಜನಾಮಾ ॥**

ಶ್ರೀಪ್ರಾಣನಾಥಚರಣಾಂಬುಜಧಿಷ್ಣ್ಯವಾಸಾತ್
ಯಸ್ಯದ್ವಿರೇಫಪದಮಾಪ ಯಥಾರ್ಥಮರ್ಥಮ್ ॥ ೧೪ ॥

ಆನಂತರ ಪೈಠಣಪುರದಲ್ಲಿ ಹುಟ್ಟಿದ ಆ ವಂಶವೃಕ್ಷವು ಹುನುಗುಂದ ಎಂಬ ಹಳ್ಳಿಯವರೆಗೆ ವಿಸ್ತಾರವಾಗಿ ಹರಡುತ್ತಿರಲು, ಅದರೊಳಗೆ ಗುರುರಾಜಾಚಾರ್ಯ ಎಂಬುವರು ಜನಿಸಿದರು. ಶ್ರೀಪ್ರಾಣ ಪತಿಯಾದ ಪರಮಾತ್ಮನ ಪಾದಕಮಲವೆಂಬ ಮನೆಯಲ್ಲೇ ಸದಾ ವಾಸಿಸುವುದರಿಂದ ಅವರ ದ್ವಿರೇಫ (ಎರಡು 'ರ' ಕಾರವುಳ್ಳ) ಪದವು (ಗುರುರಾಜ ಎಂಬ ಹೆಸರು) (ದುಂಬಿಗೂ ದ್ವಿರೇಫವೆಂದು ಹೆಸರು) ಸತ್ಯವಾದ ಅರ್ಥವನ್ನು ಹೊಂದಿತ್ತು. ದ್ವಿರೇಫಕ್ಕೆ (ದುಂಬಿಗೆ) ಕಮಲವೇ ನೆಲೆಯಷ್ಟೆ.

ಸಂಪೂರ್ಣಧೀಪೀಠವರೇ ವಿರಾಜತಃ
ಸದ್ಜ್ಞಾನತೀರ್ಥಸ್ಯ ಗಿರರ್ಥಪೂರುಷಮ್ ॥
ತಚ್ಛೇಮುಷೀಯೋಷಿದಸೂತ ಸಂಶ್ರಿತಾ
ಶ್ರೀಶಪ್ರಿಯೇ ಜ್ಞಪ್ತಿವಿರಕ್ತಿಪುತ್ರಿಕೇ ॥ ೧೫ ॥

ಶ್ರೀ ಪೂರ್ಣಪ್ರಜ್ಞಾಚಾರ್ಯರ ಮೂಲ ಪೀಠವಾದ ಉತ್ತರಾದಿಮಠದ ಪೀಠದಲ್ಲಿ ವಿರಾಜಮಾನರಾದ ಶ್ರೀ ಸತ್ಯಜ್ಞಾನತೀರ್ಥರ ಮಾತಿನ ಅರ್ಥವೆಂಬ ಸತ್ಪುರುಷನನ್ನು ಈ ಗುರುರಾಜಾಚಾರ್ಯರ ಬುದ್ಧಿ ಎಂಬ ಸ್ತ್ರೀ ಆಶ್ರಯಿಸಿದಳು. ಅದರ ಫಲವಾಗಿ ಜ್ಞಾನ ವೈರಾಗ್ಯವೆಂಬ ಇಬ್ಬರು ಪುತ್ರಿಯರು ಜನಿಸಿದರು. ಇವರಿಬ್ಬರು ಶ್ರೀಹರಿಗೆ ಬಹು ಪ್ರಿಯರಾಗಿದ್ದರು.

ಶಾಬ್ದೇಽಬ್ಧಿಶೋಚೇರ್ಮಿತಶಬ್ದಭಾಸುರಃ
ಸೂಕ್ಷ್ಮ ಸ್ವಬುದ್ಧ್ಯಾ ಧೃತಯುಕ್ತಿಭೂಧರಃ ॥
ವೇದಾಂತವಿಷ್ಣ್ವಂಘ್ರಿಖಗಃ ಸುಧಾಕರಃ
ರೇಜೇ ಮಠೇಽಸೌ ಗುರುರಾಜಭೂಸುರಃ ॥ ೧೬ ॥

ಈ ಗುರುರಾಜಾಚಾರ್ಯರೆಂಬ ಬ್ರಾಹ್ಮಣರು ವ್ಯಾಕರಣದಲ್ಲಿ ಸಮುದ್ರದಂತೆ ಇದ್ದರೂ ಮಿತಭಾಷಿಗಳಾಗಿದ್ದರು. ಬುದ್ಧಿ ಸೂಕ್ಷ್ಮವಾಗಿದ್ದರೂ ಅದರಿಂದ ಧರಿಸಲ್ಪಟ್ಟ ಯುಕ್ತಿಗಳು ಪರ್ವತಗಳಂತೆ ದುರ್ಧಾರ್ಯವಾಗಿದ್ದವು. ವೇದಾಂತವೆಂಬ ವಿಷ್ಣುಪಾದ (ಆಕಾಶ)ದಲ್ಲಿ ಪಕ್ಷಿಯಂತೆ ಇದ್ದ ಅವರು ಶ್ರೀಮನ್ನ್ಯಾಯಸುಧೆಗೆ ಆಕರ(ಮನೆ)ರಾಗಿದ್ದರು. ಸುಧಾಕರ (ಚಂದ್ರ)ನಂತಿದ್ದರು. ಹೀಗೆ ಮಠದಲ್ಲಿ ವಿರಾಜಿಸಿದರು.

ಮಠೇಽಲ್ಪಧೀಕುತ್ಸಿತಚೇಷ್ಟಯೋದಯ -
ದ್ಧಿಕಾರರಾಹಿತ್ಯಕರಾಶ್ಯಭಾ ಗುಣಾಃ ॥

ಬುಧಸ್ಯ ಸೌಮ್ಯಪ್ರಮುಖಾ ಅಹೋ ಬಭುಃ
ವಿಕಾರಯುಕ್‌ಸಾತ್ವಿಕನಾಮಹೇತವಃ || ೧೭ ||

ಮಂದ ಬುದ್ಧಿಗಳು ಮತದಲ್ಲಿ ಕುಚೇಷ್ಟೆಗಳಿಂದ ಕೆಣಕಿದರೂ ಇವರು ನಿರ್ವಿಕಾರರಾಗಿದ್ದರು. ಇದಕ್ಕೆ ಕಾರಣ ಅವರ ಸಾತ್ವಿಕ ಗುಣಗಳು. ಆದರೆ ಹೀಗೆ ವಿಕಾರ ಬರದೇ ಇರಲು ಕಾರಣವಾದ ಈ ಗುಣಗಳೇ ಇವರಿಗೆ 'ವಿ' ಕಾರ(ವರ್ಣ)ವುಳ್ಳ ಸಾತ್ವಿಕಾಚಾರ್ಯ ಎಂಬ ಹೆಸರಿಗೆ ಕಾರಣವಾದವು. ಅಹೋ!

ಅಥ ಪ್ರಸಿದ್ಧೋ ಗುರುರಾಜಸಂಜ್ಞಕಃ
ಸತಾಂ ಗಣೇ ಸಾತ್ವಿಕವರ್ಯಸಂಜ್ಞಯಾ ||
ಗುಣೋತ್ಥಸಂಜ್ಞಾ ಗುಣತಾಮವಾಪ ನೋ -
ಽಗುಣೋತ್ಥಸಂಜ್ಞಾಪ ವಿಚಿತ್ರಮೇವ ತತ್ || ೧೮ ||

ಅನಂತರದಲ್ಲಿ ಗುರುಜಾಚಾರ್ಯ ಎಂಬ ಹೆಸರುಳ್ಳ ಇವರು ಸಜ್ಜನರ ಸಮುದಾಯ್ಯದಲ್ಲಿ ಸಾತ್ವಿಕಾಚಾರ್ಯ ಎಂದೇ ಪ್ರಸಿದ್ಧರಾದರು. ಗುಣಗಳಿಂದ ಹುಟ್ಟಿದ ಈ "ಸಾತ್ವಿಕಾಚಾರ್ಯ" ಎಂಬ ಹೆಸರು ಗುಣತ್ವ (ಅಪ್ರಾಧಾನ್ಯ) ವನ್ನು ಹೊಂದಲಿಲ್ಲ. ಮತ್ತೆ ಗುಣಭಿನ್ನರಾದ ತಂದೆಯಿಂದ ಪ್ರಾಪ್ತವಾದ " ಗುರುರಾಜಾಚಾರ್ಯ " ಎಂಬ ಹೆಸರೇ ಗುಣತ್ವವನ್ನು ಹೊಂದಿತು. ಅದು ಆಶ್ಚರ್ಯವೇ ಸರಿ.

ಮಂತ್ರಾಲಯಕ್ಷೇತ್ರಪವಿತ್ರತಾಪ್ರದ -
ಶ್ರೀರಾಘವೇಂದ್ರಾರ್ಯಪದಾಂಬುಜಂ ಭಜನ್ ||
ತತ್ಸನ್ನಿಧಾನೇನ ಚ ತಚ್ಚಲದ್ವದ -
ದ್ವೃಂದಾವನಾಭೋ ಭುವಿ ಭೂಸುರೋ ಬಭೌ || ೧೯ ||

ಮಂತ್ರಾಲಯಕ್ಷೇತ್ರಕ್ಕೆ ಪಾವಿತ್ರ್ಯವನ್ನು ನೀಡುವ ಶ್ರೀರಾಘವೇಂದ್ರಯತಿವರ್ಯರ ಪಾದಕಮಲಗಳನ್ನು ಭಜಿಸುವ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಆ ಶ್ರೀರಾಯರ ದಿವ್ಯ ಸನ್ನಿಧಾನದಿಂದ ಆ ಶ್ರೀರಾಘವೇಂದ್ರ ಗುರುಗಳ ಚಲಿಸುವ ಹಾಗೂ ಮಾತನಾಡುವ ವೃಂದಾವನದಂತೆ ಭೂಮಂಡಲದಲ್ಲಿ ಶೋಭಿಸಿದರು.

ಸರಸ್ವತೀ ವ್ಯಾಸಲಸತ್ಸರಸ್ವತೀ
ಸುರಸ್ರವಂತೀ ಗುರುರಾಜಜಾ ದಯಾ ||
ಯಮಸ್ವಸಾ ಸಮ್ಮತಿವರ್ಯಜಾತವಿತ್
ಸದಾ ಬುಧೇ ಸಂಗಮಿತಾ ಪ್ರಯಾಗವತ್ || ೨೦ ||

ಶ್ರೀ ವೇದವ್ಯಾಸದೇವರ ವಾಕ್ ಸಂಪತ್ತೆಂಬುವ ಸರಸ್ವತೀ ನದಿಯೂ ಹಾಗು ಶ್ರೀ ರಾಘವೇಂದ್ರ ಗುರುಸಾರ್ವಭೌಮರ ದಯೆಯೆಂಬುವ ದೇವನದಿಯು (ಗಂಗೆ), ಮತ್ತು ಶ್ರೀ ಸತ್ಯಜ್ಞಾನತೀರ್ಥರಿಂದ ಪಡೆದ ಸದ್ವಿದ್ಯೆಯೆಂಬುವ ಯಮುನಾನದಿಯೂ ಕೂಡ (ತ್ರಿವೇಣಿಯು) ಈ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರಲ್ಲಿ ಪ್ರಯಾಗಕ್ಷೇತ್ರದಲ್ಲಿರುವಂತೆ ಸಂಗಮಿಸಿದ್ದವು.

ವಾಣೀ ವೇದಮಣಿಃ ಕೃತಿಃ ಕ್ರತುವರಾಽದೃಷ್ಟಂ ಚ ದೃಷ್ಟಿಸ್ತಥಾ
ಸಂಗಸ್ತುಂಗವಿಹಂಗಯಾನಕರುಣಾಪೀಯೂಷವರ್ಷಾಕರಃ ॥
ಯಸ್ಯಾಶೋಭತ ತಸ್ಯ ದಿವ್ಯಚರಿತಂ ಸತ್ಸತ್ತಮೈಃ ಸಂಸ್ತುತಂ
ಪೂರ್ಣಂ ವರ್ಣಯ ಇತ್ಯಹೋ ಭುವಿ ಭಣನ್ ಭೂಯಾನ್ನರೋ ವಾನರಃ ॥ ೨೧॥

ಮಾತು ಉಪನಿಷತ್ತಿನಂತೆ ಶೋಭಿಸುತ್ತಿತ್ತು. ಕೃತಿಯು ಕ್ರತು (ಯಜ್ಞ) ವಿನಂತಿತ್ತು. ಶ್ರೀಸಾತ್ವಿಕಾಚಾರ್ಯರ ದೃಷ್ಟಿಪಾತವು ಭಾಗ್ಯಾದೃಷ್ಟವಾಗಿತ್ತು. ಸಹವಾಸವು ಗರುಡವಾಹನನಾದ ಶ್ರೀಹರಿಯ ಕರುಣೆಯೆಂಬ ಅಮೃತವನ್ನು ಮಳೆಗರೆಯುತ್ತಿತ್ತು. ಇಂತಹ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರ ಚರಿತ್ರೆ ದಿವ್ಯವಾಗಿದೆ. ಶ್ರೇಷ್ಠ ಸಜ್ಜನರಿಂದ ಶ್ಲಾಘನೀಯವಾಗಿದೆ. ಅದನ್ನು ಸಂಪೂರ್ಣವಾಗಿ ವರ್ಣಿಸಲು ಯಾರು ಸಮರ್ಥರು ? ಸಂಪೂರ್ಣವಾಗಿ ವರ್ಣಿಸುವೆನೆಂದು ಯಾರಾದರೂ ನರನು ಸಾಹಸದಿಂದ ಹೇಳಿದರೆ ಅವನು ವಾನರನೇ (ಹುಚ್ಚುಮಂಗನೇ) ಆಗುತ್ತಾನೆ.

ಭಾರ್ಯಾಸ್ಯಾಸೀಚ್ಛುಭಗುಣಗಣಾ ಪೂರ್ಣಸೌಭಾಗ್ಯವರ್ಣಾ
ಗಂಗೂರಾರ್ಯಾನ್ವಯಸರಸಿಜಾ ಭೀಮಸೇನಾರ್ಯಪುತ್ರೀ ॥
ಯಸ್ಯಾ ಆಸ್ಯೇ ಮಧುರಮಧುಪಃ ಪದ್ಮಭಾಸಾಂಶ್ಚ ಸದ್ಮ -
ನ್ಯಾರ್ಯೋ ಭೃಂಗಃ ಶುಭಹರಿಕಥಾಮಾಕ್ಷಿಕಂ ನ್ಯಸ್ಯ ರೇಜೇ ॥ ೨೨ ॥

ಒಳ್ಳೆಯ ಅನೇಕ ಗುಣಸಂಪನ್ನಳಾದ, ಪರಿಪೂರ್ಣವಾದ ಸೌಭಾಗ್ಯದ ವರ್ಣವುಳ್ಳ, "ಗಂಗೂರ" ಆಚಾರ್ಯರ ವಂಶವೆಂಬ ಸರೋವರದಲ್ಲಿ ಅರಳಿದ, ಶ್ರೀ ಭೀಮಸೇನಾಚಾರ್ಯರ ಪುತ್ರಿಯಾದ ಶ್ರೀಯಮುನಾಬಾಯಿಯವರು ಈ ಸಾತ್ವಿಕಾಚಾರ್ಯರ ಪತ್ನಿಯಾಗಿದ್ದರು. ಕಮಲದಂತಿರುವ ಅವರ ಮುಖದಲ್ಲಿ ದುಂಬಿಯಂತೆ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಮಧುರವಾದ ಮಧುವನ್ನು ಪಾನಮಾಡುತ್ತ ಅಲ್ಲಿ ಶ್ರೀ ಹರಿಕಥಾ ಎಂಬ ಮಾಕ್ಷಿಕವನ್ನು (ಜೇನು ಇಡುವ ರಸ ) ಇಟ್ಟಿದ್ದರು.

ಅಥ ಲೇಸತೂ ರುಚಿರಚಿತ್ರಭಾಷಿಣೌ
ಸುಜನಪ್ರಮೋದಕರಮಾರ್ಗಗಾಮಿನೌ ॥
ಹರಿಪಾದಪದ್ಮಮಧುಗಂಧರೂಪಿಣೌ
ಶುಭದಂಪತೀ ಶುಭದಜಾಲಿಹಾಳಗೌ ॥ ೨೩ ॥

ಮನೋಹರವಾಗಿ ಚಿತ್ರವಿಚಿತ್ರವಾಗಿ ಸಂಭಾಷಿಸುತ್ತ ಮಂಗಲಕರವಾದ ಜಾಲಿಹಾಳದಲ್ಲಿ ಕ್ರೀಡಿಸುವ ಈ ಶ್ರೇಷ್ಠ ದಂಪತಿಗಳು ಸಜ್ಜನರಿಗೆ ಸಂತೋಷ ನೀಡುವ ಸನ್ಮಾರ್ಗದಲ್ಲಿಯೇ ಸಂಚರಿಸುತ್ತಾ ಶ್ರೀಹರಿಯ ಪಾದ ಪದುಮದಲ್ಲಿ ಮಧು ಮತ್ತು ಗಂಧಗಳಂತೆ ಅನ್ಯೋನ್ಯವಾಗಿ ಆಸಕ್ತರಾಗಿದ್ದರು.

**ಶುಚಿಶೀತಶೋಚಿಷಿ ಗತೇಽಖಿಲೇಪ್ಸಿತೇ**
**ಸುತಭಾಸ್ಕರೇತ್ವನುದಿತೇಽತರೇಽನಯೋಃ ॥**
**ಶ್ರಿತಶುಭ್ರವಿಷ್ಣುಪದಶೃಂಗಶೈಲಯೋಃ**
**ಘನಚಿಂತನಾಖ್ಯತಿಮಿರಂ ಸಮಾವೃತಮ್ ॥ ೨೪ ॥**

ಈ ದಂಪತಿಗಳು ನಿರ್ಮಲವಾದ ವಿಷ್ಣುಪದವನ್ನು (ಆಕಾಶವನ್ನು) ಆಶ್ರಯಿಸಿರುವ ಶಿಖರ (ಶಿರಸ್ಸು) ವುಳ್ಳ ಎರಡು ಬೆಟ್ಟದಂತೆ ಶೋಭಿಸುತ್ತಿದ್ದಾರೆ. ಇವರ ನಡುವೆ ಶುಚಿ (ಶೃಂಗಾರ)ವೆಂಬ ಚಂದ್ರನು ವಿಲಾಸಮಾಡಿ ಅಸ್ತಂಗತನಾಗಿದ್ದ. ಆದರೆ ಈ ಚಂದ್ರನ ನಂತರ ಎಲ್ಲರೂ ಅಪೇಕ್ಷಿಸುವ ಪುತ್ರನೆಂಬ ಸೂರ್ಯನು ಇನ್ನೂ ಉದಯಿಸಲೇ ಇಲ್ಲ. ಆಗ ಇವರ ನಡುವೆ ಚಿಂತೆಯು ನಿಬಿಡವಾದ ಕತ್ತಲೆಯಂತೆ ಆವರಿಸಿತ್ತು.

**ಕುಲನಾಥಮಾಸಹಿತವೇಂಕಟೇಶ್ವರಂ**
**ಸತತಂ ಸತಾಂ ಹಿತದಮಾತತಪ್ರಭಮ್ ॥**
**ಶರಣಂ ಗತೌ ವಿಮಲಧೀತದಂಪತೀ**
**ವರಪುತ್ರರತ್ನವರಕಾಂಕ್ಷಿಣಾವುಭೌ ॥ ೨೫ ॥**

ಶ್ರೇಷ್ಠಪುತ್ರನೆಂಬ ರತ್ನಶ್ರೇಷ್ಠವನ್ನು ಅಪೇಕ್ಷಿಸುವ ಈ ದಂಪತಿಗಳು ನಿರ್ಮಲವಾದ ಮನಸ್ಸುಳ್ಳವರಾಗಿ ಕುಲದೇವತೆಯಾದ, ಸದಾ ಸಜ್ಜನರಿಗೆ ಹಿತವನ್ನು ನೀಡುವ; ವಿಸ್ತಾರವಾದ ಕಾಂತಿಯುಳ್ಳ, ಪದ್ಮಾವತೀಪತಿಯಾದ ಶ್ರೀವೆಂಕಟೇಶದೇವರನ್ನು ಮೊರೆ ಹೊಕ್ಕರು.

**ಶತಧೀಸರೋಜಪದಪದ್ಮಮಾಲಯಾ**
**ಹರಿಭಕ್ತಿಸೂತ್ರಯುತಯಾರ್ಚಿತೋಽಪ್ಯಲಮ್ ॥**
**ಯದಿ ಚಾಭವಿಷ್ಯದಯಮಪ್ರಸನ್ನಧೀಃ**
**ಗಿರಿರಾಡಯಾಸ್ಯದುಪಲತ್ವಮೇವ ಹಿ ॥ ೨೬ ॥**

ಶ್ರೀ ಪೂರ್ಣಪ್ರಜ್ಞಾಚಾರ್ಯರೆಂಬ ಸರೋವರದಲ್ಲಿ ಅರಳಿದ ಪದಗಳೆಂಬ ಪದುಮಗಳನ್ನು ಹರಿಭಕ್ತಿಯೆಂಬ ಸೂತ್ರದಿಂದ ಬಂಧಿಸಿ ರಚಿಸಿದ ಉತ್ತಮಹಾರದಿಂದ ಚೆನ್ನಾಗಿ ಪೂಜಿಸಿದರೂ ಒಂದು ವೇಳೆ ಈ ವೆಂಕಟಗಿರಿಯೊಡೆಯನಾದ ಹರಿಯು ಪ್ರಸನ್ನನಾಗದಿದ್ದರೆ ಗಿರಿರಾಜನಾದ

ಇವನು ಗಿರಿಯಂತೆ ಕಲ್ಲಾಗಬೇಕಾದೀತು! (ಅಂದರೆ ಸಾತ್ವಿಕಾಚಾರ್ಯ ದಂಪತಿಗಳ ಸೇವೆಗೆ ಶ್ರೀಹರಿ ಸುಪ್ರೀತನಾದ ಎಂದು ಭಾವ.)

ಅಥ ಸತ್ಯಪರಾಕ್ರಮಮುನೀಶಪಾದಪಂ
ಶ್ರಯತಾಮಿತೀಹ ಹರಿಣಾ ಚ ಸೂಚಿತೇ ॥
ಯಯತುಶ್ಚ ಚಿತ್ತಪುರಮೀಶಚೋದಿತೌ
ರಮಣೀಯವಿಷ್ಣುಪದಸಂಶ್ರಿತೌ ದ್ವಿಜೌ ॥ ೨೭ ॥

ಅನಂತರ ಶ್ರೀ ಸತ್ಯಪರಾಕ್ರಮ ಯತಿವರ್ಯರೆಂಬ ಕಲ್ಪವೃಕ್ಷವನ್ನು ಆಶ್ರಯಿಸಿರೆಂದು ಪರಮಾತ್ಮನು ಸೂಚಿಸಿದನು. ಕೂಡಲೇ ಮನೋಹರವಾದ ವಿಷ್ಣುಪಾದವೆಂಬ ಆಕಾಶವನ್ನು ಆಶ್ರಯಿಸಿರುವ ಈ ದಂಪತಿಗಳೆಂಬ ಪಕ್ಷಿಗಳು ಪರಮಾತ್ಮನಿಂದ ಪ್ರೇರಿತರಾಗಿ ಚಿತ್ತಾಪುರಕ್ಕೆ ಹೊರಟವು.

ಶ್ರೀಶಾನಂದದನಂದತೀರ್ಥಪದಭೂಃ ಸದ್ಭಕ್ತಿವೈರಾಗ್ಯಧೀ -
ರೂಪೇಣ ದ್ಯುನದೀಜಲೇನ ವಿಮಲಃ ಶ್ರೀ ಸಾತ್ವಿಕಾರ್ಯಾತ್ಮಜಃ ॥
ಭಕ್ತಿಜ್ಞಪ್ತಿವಿರಕ್ತಿಭಿಃ ಸ್ವಸಮಯಾ ಪತ್ನ್ಯಾ ಯುತೋಽಸ್ಮಾರಯತ್
ಪ್ರಾಣೇಶಪ್ರಿಯಸೇವಯಾ ವಿಮಲಯಾ ಸನ್ಮಧ್ವಗೇಹಾದಿಕಾನ್ ॥ ೨೮ ॥

ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಶ್ರೀಹರಿಗೆ ಆನಂದ ನೀಡುವ ಶ್ರೀಮತ್ ಆನಂದತೀರ್ಥ ಭಗವತ್ಪಾದಾಚಾರ್ಯರ ಪದಗಳನ್ನೇ ಆಶ್ರಯವಾಗಿ ಹೊಂದಿದ್ದಾರೆ. ಒಳ್ಳೆಯ ಜ್ಞಾನ ಭಕ್ತಿ ವಿರಕ್ತಿ ಎಂಬ ಗಂಗೆಯ ನೀರಿನಿಂದ ನಿರ್ಮಲರಾಗಿದ್ದಾರೆ. ಅವರ ಪತ್ನಿಯೂ ಸಹ ಜ್ಞಾನ ಭಕ್ತಿ ವೈರಾಗ್ಯಗಳಿಂದ ಪತಿಗೆ ಅನುಗುಣರಾಗಿದ್ದಾರೆ. ಇಂತಹ ಹೆಂಡತಿಯಿಂದ ಯುಕ್ತರಾಗಿ ಶ್ರೀಸಾತ್ವಿಕಾಚಾರ್ಯರು ಚಿತ್ತಾಪುರದಲ್ಲಿ ತಾವು ಮಾಡಿದ ನಿರ್ಮಲವಾದ ಶ್ರೀಪ್ರಾಣನಾಥ ಶ್ರೀಹರಿಯ ಸೇವೆಯಿಂದ, ಪರಮ ಮಂಗಲರಾದ ಶ್ರೀ ಮಧ್ಯಗೇಹ ಭಟ್ಟರೇ ಮೊದಲಾದ ಪ್ರಾಚೀನ ಸಾಧಕರನ್ನು ನೆನಪಿಗೆ ತರುತ್ತಿದ್ದರು.

ಆನಂದಾಹಾರ್ಯರಾಜತ್ಪ್ರಭುವರಕೃಪಯಾಽನಂದತೀರ್ಥೀಯತುಷ್ಟ್ಯಾ -
ಽಽನಂಧೇ ಶಾಸ್ತ್ರಾಗ್ನಿದಿಕ್ಷದ್ವಿಜಪಮಿತಶಕೇ ಫಾಲ್ಗುಕೃಷ್ಣೇ ನವಮ್ಯಾಮ್ ॥
ಸಾಧ್ವಾನಂದಪ್ರದಾತಾ ಸಮಜನಿ ಯಮುನಾಗರ್ಭವಾರ್ಧೌ ಸುತೇಂದುಃ
ಪ್ರಾಣಶ್ರೀಕೃಷ್ಣಪಕ್ಷೋ ನವವಿಧಭಗವದ್ಭಕ್ತಿಮಾನ್ ಫಲ್ಗುನಾಭಃ ॥ ೨೯ ॥

ಆನಂದ ಗಿರಿಗೆ ಒಡೆಯನಾದ ಶ್ರೀವೆಂಕಟಪತಿಯು ಕೃಪೆ ತೋರಿದ್ದಾನೆ. ಆನಂದತೀರ್ಥರ ಸಂತತಿಯಲ್ಲಿ ಬಂದ ಈ ಯತಿಗಳೂ (ಶ್ರೀ ಸತ್ಯಪರಾಕ್ರಮರು) ಸಂತುಷ್ಟರಾಗಿದ್ದಾರೆ.

ಶಾಸ್ತ್ರ-೬-ಅಗ್ನಿ-೩-ದಿಕ್ಪ-೮-ದ್ವಿಜಪ (ಚಂದ್ರ) -೧ ಇವುಗಳಿಂದ ಊಹಿಸುವ ಶಾಲಿವಾಹನ ಶಕದಲ್ಲಿ(೧೮೩೬ - ಅಂಕಾನಾಂ ವಾಮತೋಗತಿಃ ) ಆನಂದನಾಮಕ ಸಂವತ್ಸರದ ಫಾಲ್ಗುಣಮಾಸದ ಕೃಷ್ಣಪಕ್ಷದ ನವಮೀ ತಿಥಿ ಸಮೀಪಿಸಿದೆ. ಆಗ ಯಮುನಾಬಾಯಿಯವರ ಗರ್ಭಾಂಬುಧಿಯಲ್ಲಿ ಪುತ್ರನೆಂಬ ಚಂದ್ರನು ಉದಯಿಸಿದನು. ಆನಂದಗಿರಿಯೊಡೆಯನ ಕರುಣೆಯಿಂದ ಆನಂದತೀರ್ಥಿಯರ (ಶ್ರೀ ಸತ್ಯಪರಾಕ್ರಮಯತಿಗಳ) ಸಂತೋಷದಿಂದ ಆನಂದನಾಮಕ ಸಂವತ್ಸರದಲ್ಲಿ ಹುಟ್ಟಿದ ಆ ಶಿಶು ಸಜ್ಜನರಿಗೆ ಆನಂದವನ್ನು ನೀಡುವುದಾಗಿತ್ತು. ಕೃಷ್ಣ ಪಕ್ಷದಲ್ಲಿ ಹುಟ್ಟಿದ ಆ ಶಿಶು ಪ್ರಾಣನಾಥನಾದ ಶ್ರೀ ಕೃಷ್ಣನ ಪಕ್ಷದಲ್ಲಿ ವಿರಾಜಿಸುವುದಾಗಿತ್ತು. ನವಮಿಯಲ್ಲಿ ಹುಟ್ಟಿದ ಆ ಶಿಶು ನವವಿಧ ಭಗದ್ಭಕ್ತಿಯುಕ್ತವಾಗಿತ್ತು. ಫಾಲ್ಗುಣದಲ್ಲಿ ಹುಟ್ಟಿದ ಆ ಶಿಶು ಫಲ್ಗುನ (ಅರ್ಜುನ) ನಂತೆ ವಿರಾಜಿಸುತ್ತಿತ್ತು.

**ಶ್ರೀಶಾನುಗ್ರಹವರವಿಗ್ರಹಂ ಸುತಂ ತಂ**
**ಸಂಪ್ರೀತಾಶ್ರಯದಯತೀ ಚ ದಂಪತೀ ತೌ ॥**
**ಪಶ್ಯಂತೌ ಯದತುಲಮಾಪತುಸ್ಸುಖಂ ತ -**
**ನ್ನಿರ್ವಾಚ್ಯೇತರಪದವಾಚ್ಯಮುಲ್ಲಲಾಸ ॥ ೩೦ ॥**

ನಿರ್ಮಲ ಸೇವೆಯಿಂದ ಆಶ್ರಯ ನೀಡಿದ ಶ್ರೀ ಸತ್ಯಪರಾಕ್ರಮ ಯತಿಗಳನ್ನು ಸಂತೋಷಗೊಳಿಸಿದ ಆ ದಂಪತಿಗಳು ಪರಮಾತ್ಮನ ಅನುಗ್ರಹವೇ ಮೂರ್ತಿಯಾಗಿ ಬಂದಂತಿರುವ ಈ ಪುತ್ರನನ್ನು ನೋಡಿದಾಗ ಸಾಟಿಯಿಲ್ಲದ ಆನಂದವನ್ನು ಹೊಂದಿದರು. ಆ ಆನಂದವೆಷ್ಟೆಂದು ಹೇಳಲಾಗದು. ಆದ್ದರಿಂದ 'ಅನಿರ್ವಾಚ್ಯ' ಪದದಿಂದ ಮಾತ್ರ ಅದನ್ನು ವರ್ಣಿಸಬಹುದು.

**ಶ್ರೀನಿವಾಸಪದಧಾರಿಯತೀಡ್ಯ ಶ್ರೀನಿವಾಸವರಜಸ್ಯ ಸುತಸ್ಯ ॥**
**ಶ್ರೀನಿವಾಸ ಇತಿ ನಾಮ ಹಿ ಸಾರ್ಥಂ ನಾಮಕರ್ಮವಿದಧಜ್ಜನಕೋಕ್ತಮ್ ॥ ೩೧ ॥**

ಶ್ರೀ ಸತ್ಯಪರಾಕ್ರಮತೀರ್ಥಯತಿಗಳಿಗೆ ಪೂರ್ವಾಶ್ರಮದ ಹೆಸರು 'ಶ್ರೀನಿವಾಸಾಚಾರ್ಯ' ಎಂದು. ಇಂತಹ ಶ್ರೀ ಸತ್ಯಪರಾಕ್ರಮಯತಿಗಳಿಂದ ಸ್ತುತ್ಯನಾದ ಆ ಕುಲದೇವತೆಯಾದ ವೆಂಕಟಪತಿಯೂ ಶ್ರೀನಿವಾಸನಾಗಿದ್ದಾನೆ. ಇವರ ವರದಿಂದ ಹುಟ್ಟಿದ ಆ ಮಗನಿಗೆ ಜಾತಕರ್ಮ ನಾಮಕರಣವನ್ನು ಮಾಡುವ ತಂದೆಗಳಾದ ಸಾತ್ವಿಕಾಚಾರ್ಯರು " ಶ್ರೀನಿವಾಸ " ಎಂದೇ ನಾಮಧೇಯವನ್ನಿಟ್ಟರು. ಅದು ಅರ್ಥಪೂರ್ಣವಾಗಿದೆಯಷ್ಟೆ.

**ಮಾತೃಮೋದಕರಹಾಸಶಶಿಶ್ರೀಃ ಯತ್ರ ತಾತಸುಖದಾಯಿಗುಣಶ್ರೀಃ ॥**
**ಪ್ರೀತಲೋಕಚತುರತ್ವವಚಶ್ರೀಃ ಶ್ರೀನಿವಾಸಪದಮಸ್ಯ ಹಿ ಸಾರ್ಥಮ್ ॥ ೩೨ ॥**

ತಾಯಿಗೆ ಆನಂದ ಕೊಡುವ ಮಂದಹಾಸವೆಂಬ ಚಂದಿರನ ಶ್ರೀ (ಬೆಳದಿಂಗಳು), ತಂದೆಗೆ ಆನಂದಕೊಡುವ ಗುಣವೆಂಬ ಶ್ರೀ, ಲೋಕವನ್ನೆಲ್ಲ ಸಂತೋಷಗೊಳಿಸುವ ಚಾತುರ್ಯದ ವಾಕ್ ಎಂಬ ಶ್ರೀ, ಇರುವುದರಿಂದ ಈ ಶಿಶುವಿಗೆ 'ಶ್ರೀನಿವಾಸ' ಎಂಬ ಹೆಸರು ಅರ್ಥಪೂರ್ಣವಷ್ಟೆ.

**ವ್ಯಾಪ್ತದಿಗ್ಜಿತರವಿಃ ಕವಿತಾಶ್ರೀಃ ದಾಸವರ್ಯಪದಗಾನರಸಶ್ರೀಃ ||**
**ಯತ್ರ ತರ್ಕವನರಾಜನದಶ್ರೀಃ ಶ್ರೀನಿವಾಸಪದಮಸ್ಯ ಹಿ ಸಾರ್ಥಮ್ || ೩೩ ||**

ವಿಸ್ತಾರವಾದ ಜ್ಞಾನದಿಂದ ಸೂರ್ಯನನ್ನು ಗೆದ್ದಿರುವ ಕವಿತಾ ಎಂಬ ಶ್ರೀ, ಪುರಂದರಾದಿ ದಾಸಶ್ರೇಷ್ಠರ ಪದ್ಯಗಳ ಸಂಗೀತರಸವೆಂಬ ಶ್ರೀ, ನ್ಯಾಯಶಾಸ್ತ್ರವೆಂಬ ವನರಾಜನ ಗರ್ಜನೆಯೆಂಬುವ ಶ್ರೀ, ಹೊಂದಿದ ಈ ಶಿಶುವಿಗೆ ಶ್ರೀನಿವಾಸ ಎಂಬ ನಾಮಧೇಯವು ಅರ್ಥಪೂರ್ಣವಷ್ಟೆ.

**ಶಾಬ್ದಭೂಷಣವಿಭೂಷಿತವಾಕ್‌ಶ್ರೀಃ ತುಷ್ಟಸದ್ವಿಬುಧಶಾಸ್ತ್ರಸುಧಾಶ್ರೀಃ ||**
**ಯತ್ರ ವಿಷ್ಣುಪದಭಕ್ತಿಮತಿಶ್ರೀಃ ಶ್ರೀನಿವಾಸಪದಮಸ್ಯ ಹಿ ಸಾರ್ಥಮ್ || ೩೪ ||**

ವಾಕ್ ಎಂಬ ಶ್ರೀ ವ್ಯಾಕರಣವೆಂಬ ಆಭರಣದಿಂದ ಅಲಂಕೃತವಾಗಿತ್ತು. ಸಜ್ಜನರಾದ ವಿದ್ವಾಂಸರಿಗೆ ಸಂತೋಷಕೊಡುವ ಶಾಸ್ತ್ರಗಳು ಹಾಗು ನ್ಯಾಯಸುಧಾ ಎಂಬ ಶ್ರೀ ಅಲ್ಲಿತ್ತು. ವಿಷ್ಣುಪದಗಳಲ್ಲಿ ಭಕ್ತಿ ಹೊಂದಿದ ಬುದ್ಧಿಯೆಂಬ ಶ್ರೀ ಇತ್ತು. ಇಂತಹ ಅನೇಕ ಶ್ರೀ ಇರುವ ಕೂಸಿಗೆ ಶ್ರೀನಿವಾಸನೆಂದು ಹೆಸರಿಸುವುದು ಸಾರ್ಥಕವಾಗಿದೆಯಷ್ಟೆ.

**ಇತಿಪ್ರಾಜ್ಞಸಂವರ್ಣ್ಯನಾಮಾ ಸ ಧೀಮಾನ್ ಶಿಶುಃ**
**ಕೃಷ್ಣಪಕ್ಷೋದಿತೋಽಪ್ಯೈಧತಾಲಮ್ ||**
**ಶ್ರಿತಾಕೃಷ್ಣಪಕ್ಷೇಂದುವತ್ತನ್ನ ಚಿತ್ರಂ**
**ಶ್ರಿತಪ್ರಾಣರಾಟ್‌ಕೃಷ್ಣಪಕ್ಷಸ್ಯ ನೂನಮ್ || ೩೫ ||**

ಹೀಗೆ ಜ್ಞಾನಿಗಳಿಂದ ವರ್ಣಿಸಲ್ಪಡುವ ನಾಮಧೇಯವುಳ್ಳ ಈ ಶಿಶುವು ಕೃಷ್ಣಪಕ್ಷದಲ್ಲಿ ಹುಟ್ಟಿದ್ದರೂ ಕೃಷ್ಣಪಕ್ಷವನ್ನು ಆಶ್ರಯಿಸದ ಶುಕ್ಲಪಕ್ಷದ ಚಂದಿರನಂತೆ ಅಭಿವೃದ್ಧಿ ಹೊಂದಿದ. ಇದು ಪ್ರಾಣಪತಿಯಾದ ಶ್ರೀ ಕೃಷ್ಣನ ಪಕ್ಷದಲ್ಲಿದ್ದವರಿಗೆ ಏನು ಆಶ್ಚರ್ಯ!

**ತರಲನೀಲಸುಕುಂತಲಶೋಭಿತಪ್ರತತಫಾಲಲಸನ್ಮುಖಮಂಡಲಃ ||**
**ನಲಿನಸನ್ನಿಭಲೋಲಸುಲೋಚನಃ ಸ ಜನನೀಜನಕಪ್ರಮದಪ್ರದಃ || ೩೬ ||**

**ಶ್ರವಣಸಂಶ್ರಿತಭೂಷಣಶೋಚಿಷಾ ಲಸಿತಪೀವರಗಂಡಸುಮಂಡಿತಃ ||**
**ವಿಜಿತಚಂಪಕದೀಧಿತಿನಾಸಿಕಃ ಸ್ಮಿತವಿಭಾಸಿತರಕ್ತರದಚ್ಛದಃ || ೩೭ ||**

ಅತನುಪೀವರಪಾಣಿಪದಾನ್ವಿತಃ ಸ್ವತನುಭೂಷಿತಸರ್ವವಿಭೂಷಣಃ ||
ಹರಿಗುರುಪ್ರವರೋರುಕೃಪಾವಪುಃ ಕಿಮು ನ ಕರ್ಷತಿ ಚಿತ್ತತತಿಂ ಸತಾಮ್ || ೩೮||

ಚಂಚಲವಾದ ಕಪ್ಪಾದ ಗುಂಗುರು ಕೂದಲುಗಳಿಂದ ಶೋಭಿಸುವ ವಿಸ್ತಾರವಾದ ಹಣೆಯಿಂದ ಕಂಗೊಳಿಸುವ ಮುಖಮಂಡಲ, ಕಮಲದಂತಿರುವ ಚಂಚಲವಾದ ಕಣ್ಣುಗಳು, ಕಿವಿಗಳನ್ನಾಶ್ರಯಿಸಿರುವ ಕುಂಡಲಾದಿ ಆಭರಣಗಳ ಕಾಂತಿಯಿಂದ ಹೊಳೆಯುವ ಪುಷ್ಟವಾದ ಕಪೋಲಗಳು, ಸಂಪಿಗೆಯ ಕಾಂತಿಯನ್ನು ಜಯಿಸುವ ನಾಸಿಕ, ಮಂದಹಾಸದಿಂದ ಶೋಭಿಸುವ ಕೆಂದುಟಿಗಳು, ದಪ್ಪ ಪುಷ್ಟವಾದ ಹಸ್ತ ಪಾದಾದಿ ಅವಯವಗಳು, ಆಭರಣಗಳಿಗೆ ಆಭರಣವಾದ ಸುಂದರವಾದ ದೇಹ ಇವೆಲ್ಲವನ್ನು ಹೊಂದಿರುವ ಆ ಶಿಶು ಶ್ರೀ ಹರಿಗುರುಗಳ ಪರಮಕೃಪಾಮೂರ್ತಿಯೇ ಸರಿ. ಇಂತಹ ಈ ಶಿಶುವು ತಂದೆ ತಾಯಿಗಳಿಗೆ ಆನಂದ ನೀಡುವುದಲ್ಲದೇ, ಎಲ್ಲ ಸಜ್ಜನರ ಹೃದಯವನ್ನು ಆಕರ್ಷಿಸುವುದಿಲ್ಲವೇ?

ಚಕ್ರೇಽಥ ಸಾತ್ವಿಕಪದಪ್ರಥಿತೋ ದ್ವಿಜೇಂದ್ರಃ
ಬಾಲಸ್ಯ ವಾಲಕುಲಪೂರಿತಮಸ್ತಕಸ್ಯ ||
ಚೌಲಂ ವಿಧಿಂ ಸುಸಮಯೇ ಸಮಯೇಽಸಮೋಽಯ -
ಮಭ್ಯಾಸಮಕ್ಷರಕುಲಸ್ಯ ತತಃ ಶುಭಸ್ಯ || ೩೯ ||

ಆನಂತರ ಬ್ರಾಹ್ಮಣಶ್ರೇಷ್ಠರಾದ ಆ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಕೇಶಗಳ ಸಂಕುಲದಿಂದ ತುಂಬಿದ ಶಿರಸ್ಸುಳ್ಳ ತಮ್ಮ ಬಾಲ ಪುತ್ರನಿಗೆ ಒಳ್ಳೆಯ ಮುಹೂರ್ತದಲ್ಲಿ ಚೌಲವಿಧಿಯನ್ನು ಮಾಡಿದರು. ಆ ಬಳಿಕ ಶಾಸ್ತ್ರದಲ್ಲಿ ಅಸದೃಶರಾದ ಆ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಮಂಗಲಕರನಾದ ಆ ಪುತ್ರನಿಗೆ ಅಕ್ಷರಾಭ್ಯಾಸವನ್ನೂ ಮಾಡಿಸಿದರು.

ಪಠನೇ ಪಟುಂ ಸುತಮಥೈಕಪಾಠಿನಂ
ಪ್ರತಿಭಾಪ್ರಭಾಪ್ತಶುಭಕೀರ್ತಿಶೋಭಿನಮ್ ||
ಜನಕಸ್ಯ ವೀಕ್ಷ್ಯ ನನು ಜಾತಮುತ್ತುಲಾಂ
ಅಮಿತತ್ವ ಆಪ ನ ಚ ತದ್ಯಶೋ ವಿನಾ || ೪೦ ||

ಆ ಬಾಲಕ ಪಠನ ಮಾಡುವುದರಲ್ಲಿ ಅತ್ಯಂತ ಪಟುವಾಗಿದ್ದಾನೆ. ಮಿಗಿಲಾಗಿ ಏಕಪಾಠಿ. ಅವನು ಪ್ರತಿಭೆಯ ಪ್ರಭೆಯಿಂದ ಒಳ್ಳೆಯ ಕೀರ್ತಿಯಿಂದ ಶೋಭಿಸುತ್ತಿದ್ದಾನೆ. ಇಂತಹ ಪುತ್ರನನ್ನು ನೋಡುವ ಆ ತಂದೆಯ ಆನಂದಕ್ಕೆ ಸಮವಾದದ್ದು ಇದೆಯೇ? ಆ ಆನಂದಕ್ಕೆ ಅಮಿತತ್ವದ (ಅಪರಿಮಿತತ್ವದ) ವಿಷಯದಲ್ಲಿ ಆ ಬಾಲಕನ ಕೀರ್ತಿಯೊಂದೇ ಸಮಾನವಾಗಬಹುದು.

ಅಥ ತರತಿ ಸುತೇಽಬ್ದಂ ಸಪ್ತಮಂ ವ್ಯಾಪ್ತದೀಪ್ತೌ
ಅದಿತಿಸುತಸಮಾನೇ ಮಾನಸೇನಾಸಮಾನೇ ॥
ಉಪನಯನಮುಹೇನ ಜ್ಞಾನವೈರಾಗ್ಯ ಭಕ್ತಿ -
ತ್ರಿಭುವನತತಪಾದಂ ತಂ ಪಿತಾ ಕರ್ತುಮೈಚ್ಛತ್ ॥ ೪೧ ॥

ಅನಂತರ, ವ್ಯಾಪ್ತತೇಜಸ್ಸಂಪನ್ನನಾದ ಆ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರ ಪುತ್ರನು ಏಳನೇ ವಯಸ್ಸನ್ನು ದಾಟಿದ್ದಾನೆ. ನೋಡುವವರಿಗೆ ಅದಿತಿಪುತ್ರನಾದ ಶ್ರೀ ವಾಮನನಂತೆ ತೋರುತ್ತಿದ್ದ. ಮನಸ್ಸಿನ ಶಕ್ತಿಯಿಂದ ಅಸದೃಶನಾಗಿದ್ದ. ಆಗ ತಂದೆಗಳಾದ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಉಪನಯನ ಮಹೋತ್ಸವದಿಂದ ವಾಮನನಂತಿರುವ ಈ ಪುತ್ರನನ್ನು ಜ್ಞಾನ ವೈರಾಗ್ಯ ಭಕ್ತಿಯೆಂಬ ಮೂರು ಲೋಕಗಳನ್ನು ವ್ಯಾಪಿಸುವ ಪದವುಳ್ಳವನನ್ನಾಗಿ (ತ್ರಿವಿಕ್ರಮನನ್ನಾಗಿ) ಮಾಡಲು ಅಪೇಕ್ಷಿಸಿದರು.

ಗುಣಮಣಿಗಣಪೂರ್ಣಸ್ವರ್ಣವರ್ಣಸ್ವರೂಪ -
ದ್ವಿಜತನುಜನಿಭಾಜೋ ಭಾವಿ ಜನ್ಮ ದ್ವಿತೀಯಮ್ ॥
ಸುಜನವಿಜರವರ್ಯಾ ಭೇಜುರಾಕರ್ಣ್ಯ ಮೋದಂ
ಜಯದಜಿತಜಯಂತ್ಯಾಕರ್ಣನೇನೇವ ತೂರ್ಣಮ್ ॥ ೪೨ ॥

ಆ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರಿಂದ ಜನ್ಮ ಪಡೆದ ಪುತ್ರನು ಗುಣಗಳೆಂಬ ಮಣಿಗಳಿಂದ ಸಂಪೂರ್ಣನಾಗಿದ್ದಾನೆ. ಸುವರ್ಣದಂತೆ ವರ್ಣವುಳ್ಳ ರೂಪ. ಇಂತಹ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರ ಪುತ್ರನಿಗೆ ಮುಂದೆ ನಡೆಯುವ ಎರಡನೇ ಜನುಮವನ್ನು (ಉಪನಯನವನ್ನು -ದ್ವಿಜತ್ವವನ್ನು) ಕೇಳಿ ಸಜ್ಜನರೆಂಬ ದೇವವರೇಣ್ಯರು ಉತ್ಕೃಷ್ಟವಾದ ಶ್ರೀಹರಿಯ ಜಯಂತೀಯನ್ನು ಕೇಳಿದಾಗ ಹೇಗೋ ಹಾಗೆ ಕೂಡಲೇ ಆನಂದವನ್ನು ಹೊಂದಿದರು.

ಸದಯಹೃದಯಕಾಯಂ ಸಾತ್ವಿಕಾಚಾರ್ಯವರ್ಯಂ
ತದನು ದನುಜನಿಘ್ನಶ್ರೀಶಕಾರುಣ್ಯಮೂರ್ತಿಮ್ ॥
ಸುವಿನಯತನಯಾಗ್ರ್ಯಂ ದ್ರಷ್ಟುಕಾಮೋಽಸ್ಯ ನಿತ್ಯಂ
ಜನ ಇಹ ಮಹಮಾಹ್ವಾಮಾಗಮೇ ಕಿಂ ನು ಕಾಂಕ್ಷೇತ್ ॥ ೪೩ ॥

ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ದಯೆ ತುಂಬಿದ ಹೃದಯವುಳ್ಳ ಕಾಯವನ್ನು ಹೊಂದಿದ್ದಾರೆ. ಅವರನ್ನು, ಹಾಗೆಯೇ ಶ್ರೀಹರಿಯ ಕಾರುಣ್ಯ ಮೂರ್ತಿಯಾದ ಒಳ್ಳೆಯ ವಿನಯಸಂಪನ್ನರಾದ ಅವರ ಮಕ್ಕಳಾದ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರನ್ನು ನಿತ್ಯವೂ ನೋಡಬೇಕೆಂದು ಜನತೆ ಅಪೇಕ್ಷಿಸುತ್ತಿತ್ತು. ಇಂಥ ಜನಸಮೂಹ ಈ ಉಪನಯನ ಮಹೋತ್ಸವಕ್ಕೆ ಬರಲು ಆಹ್ವಾನವನ್ನು ಅಪೇಕ್ಷಿಸುತ್ತದೆಯೇ ? (ಆಹ್ವಾನದ ಅಪೇಕ್ಷೆ ಇಲ್ಲದೆಯೇ ಜನರು ಈ ಉತ್ಸವಕ್ಕೆ ಬರಲು ಉತ್ಸುಕರಾಗಿದ್ದರು ಎಂದು ಭಾವ.)

ನಿಜವಿಜಯಕರಾಶೀರ್ದಾನಸತ್ಪಾತ್ರಲಬ್ಧ್ಯಾ
ಶುಭತಮಪರಮಾಶೀರ್ದಾನಿಸದ್ಗೋತ್ರಲಬ್ಧ್ಯಾ ॥
ರುಚಿರವಚನಚೇತೋಹಾರಿಸನ್ಮಿತ್ರಲಬ್ಧ್ಯಾ -
ಽಮಿಲದಿಹ ಜನತಾಽಲಂ ಚೈಲವೈಚಿತ್ರ್ಯಹೃದ್ಯಾ ॥ ೪೪ ॥

ಅಲ್ಲಿ ವಿಜಯಪ್ರದವಾದ ತಮ್ಮ ಆಶೀರ್ವಾದದ ದಾನಕ್ಕೆ ಯೋಗ್ಯರಾದ ಸತ್ಪಾತ್ರರು ದೊರೆಯುತ್ತಿದ್ದರು. ಹಾಗೆಯೇ ಮಂಗಲಕರವಾದ ಉತ್ತಮ ಆಶೀರ್ವಾದವನ್ನು ನೀಡುವ ಒಳ್ಳೆಯ ಗೋತ್ರದಲ್ಲಿ ಜನಿಸಿದ ವಿಪ್ರವರ್ಯರು ದೊರೆಯುತ್ತಿದ್ದರು ಮತ್ತೆ ಸುಂದರವಾದ ಮಾತುಗಳಿಂದ ಮನಸ್ಸನ್ನು ಅಪಹರಿಸುವ ಶ್ರೇಷ್ಠ ಮಿತ್ರರೂ ಅಲ್ಲಿ ದೊರೆಯುತ್ತಿದ್ದರು. ಆದ್ದರಿಂದ ಜನತೆ ಚಿತ್ರವಿಚಿತ್ರವಾದ ವಸ್ತ್ರಗಳಿಂದ ಸುಂದರವಾಗಿ ಅಲಂಕೃತವಾಗಿ ಅಲ್ಲಿ ನೆರೆದಿತ್ತು.

ಉಪನಯನದಿನಸ್ಯ ಪ್ರಾತರತ್ರಾಖಿಲೇಷು
ತತ ಇತ ಇಹ ಗತ್ವಾ ಸಂಭ್ರಮಂ ದರ್ಶಯತ್ಸು ॥
ವಿವಿಧನಿನದತೋಽದ್ಧಾಪ್ಯುದ್ಧವೇ ಬದ್ಧಧೀಷು
ಸ್ಥಲಮವನಿಮುಖಾಭಂ ಲೇಖಲೋಕೈರವೈಕ್ಷಿ ॥ ೪೫ ॥

ಉಪನಯನದ ದಿನದ ಪ್ರಾತಃ ಕಾಲ ಸಮೀಪಿಸಿತ್ತು. ಎಲ್ಲರೂ ಇಲ್ಲಿಂದ ಅಲ್ಲಿಗೆ ಅಲ್ಲಿಂದ ಇಲ್ಲಿಗೆ ಸಂಚರಣಾದಿಗಳಿಂದ ಸಂಭ್ರಮವನ್ನು ತೋರಿಸುತ್ತಾ ನಾನಾವಿಧವಾದ ಧ್ವನಿಗಳಿಂದ ಉತ್ಸವದಲ್ಲಿ ತಲ್ಲೀನರಾಗಿದ್ದರು. ಆಗ ಆ ಪ್ರದೇಶವನ್ನು ಭೂದೇವಿಯ ಮುಖವೇನೋ ಎಂಬುವಂತೆ ದೇವತೆಗಳು ಕಂಡರು.

ಇತಿ ವಿತತಮಹೇ ಸಂಸಕ್ತಚಿತ್ತೇ ಜನೌಘೇ
ಹರಿಗುರುಪದಸಕ್ತಸ್ಸಾತ್ತ್ವಿಕಾರ್ಯಸ್ತ್ವಸಕ್ತಃ ॥
ಕುತ ಇತಿ ಚ ನ ವೇತ್ತುಂ ಕೋಽಪಿ ತತ್ರಾಸ ಶಕ್ತಃ
ನ ಹಿ ಸುಲಭತಯಾ ಸ್ಯಾದ್ಧೀರಕಾರ್ಯಾರ್ಥವಿತ್ತಿಃ ॥ ೪೬ ॥

ಹೀಗೆ ಎಲ್ಲ ಜನರೂ ಈ ದೊಡ್ಡ ಉತ್ಸವದಲ್ಲಿ ತಲ್ಲೀನರಾಗಿದ್ದರೂ ಶ್ರೀ ಸಾತ್ತ್ವಿಕಾಚಾರ್ಯರು ಇಲ್ಲಿ ಆಸಕ್ತಿಯನ್ನು ತೋರಿಸಿರಲಿಲ್ಲ. ಶ್ರೀಹರಿವಾಯುಗುರುಗಳ ಪಾದಗಳಲ್ಲಿ ಅವರು ಆಸಕ್ತರಾಗಿದ್ದರು. ಅವರು ಏಕೆ ಹೀಗೆ ಮಾಡುತ್ತಿದ್ದಾರೆಂದು ಯಾರಿಂದಲೂ ತಿಳಿಯಲು ಸಾಧ್ಯವಾಗಲಿಲ್ಲ. ಧೀರರಾದವರ ಕಾರ್ಯದ (ಮರ್ಮವನ್ನು) ಪ್ರಯೋಜನವನ್ನು ಸುಲಭವಾಗಿ ತಿಳಿಯಲಾಗದಷ್ಟೆ.

ವಿದಧತಿ ಚ ವಿಲಂಬಂ ಸಾತ್ತ್ವಿಕಾರ್ಯೇ ಮಹೇಽಸ್ಮಿನ್
ಸಕಲಜನಕುಲಂ ಸಂವ್ಯಾಕುಲೇಕ್ಷಾಲಿಲೀಲಮ್ ॥

ಅಯಮವಿದಿತ ಆಸ್ತೇಽಸ್ಮಿನ್ ವಿಲಂಬೋ ಮಮೇತಿ
ಪ್ರತಿವಚನಕರೋ ವ್ಯಸ್ಮಾರಯಲ್ಲಗ್ನಮೇನಮ್ ॥ ೪೭ ॥

ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಹೀಗೆ ಉತ್ಸವದಲ್ಲಿ ವಿಲಂಬವನ್ನು ಮಾಡುತ್ತಿದ್ದರಿಂದ ಎಲ್ಲ ಜನಗಳ ಕಣ್ಣುಗಳು ಕಳವಳಗೊಂಡಿರುವ ದುಂಬಿಗಳಂತೆ ವರ್ತಿಸುತ್ತಿದ್ದವು. "ಯಾಕೆ ಹೀಗೆ ನಾನು ವಿಲಂಬ ಮಾಡುತ್ತಿದ್ದೇನೆ ಎಂಬುದು ನನಗೇ ತಿಳಿದಿಲ್ಲ" ವೆಂದು ಪ್ರತಿಯಾಗಿ ಉತ್ತರಿಸುತ್ತ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಈ ಲಗ್ನವನ್ನು (ಉಪನಯನದ ಮುಹೂರ್ತವನ್ನು) ಮರೆಯುವಂತೆ ಮಾಡಿಬಿಟ್ಟರು.

ಅಥ ಮಹಸಿ ಮುಹೂರ್ತೇ ಸನ್ನಿವೃತ್ತೇಽಪ್ಯಖಿನ್ನಃ
ವಿಲಸಿತಮುಖಚಂದ್ರಃ ಸಾತ್ವಿಕೇಂದ್ರೋ ಬಭಾಷೇ ॥
ಉಪನಯನಮುಹೂರ್ತಂ ಪಶ್ಯತಾದ್ಯಾನ್ಯದಿತ್ಥಂ
ಪ್ರಥಿತಮಹಿತದೈವಜ್ಞಾನಿನಸ್ತತ್ರ ಸಂಸ್ಥಾನ್ ॥ ೪೮ ॥

ಉಪನಯನ ಮಹೋತ್ಸವದ ಮುಹೂರ್ತವು ಮೀರಿಹೋಯಿತು. ಆದರೂ ಖೇದವನ್ನು ಹೊಂದಲಿಲ್ಲ. ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರ ಮುಖವು ಅರಳಿದ ಚಂದ್ರನಂತೆಯೇ ಶೋಭಿಸುತ್ತಿತ್ತು. ಆಗ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಅಂದಿನ ದಿನಕ್ಕೇ ಸಂಬಂಧಿಸಿದ ಇನ್ನೊಂದು ಒಳ್ಳೆ ಉಪನಯನ ಮುಹೂರ್ತವನ್ನು ನೋಡಬೇಕೆಂದು ಅಲ್ಲಿ ಬಂದಿರುವ ಪ್ರಸಿದ್ಧರಾದ ಪೂಜ್ಯರಾದ ಜ್ಯೋತಿಷ್ಯರಿಗೆ ಹೇಳಿದರು.

ಇತರವರಮುಹೂರ್ತೇ ದರ್ಶಿತೇ ತೂರ್ಣಮೇತ್ಯೈಃ
ಪುನರಪಿ ರತಿಹೀನೇಽಸ್ಮಿಂಶ್ಚ ಖಿನ್ನೇ ಜನೌಘೇ ॥
ಅಥ ಚ ಧೃತಗುರುಶ್ರೀರಾಘವೇಂದ್ರಪ್ರಸಾದಃ
ಧವಲವಸನಧಾರೀ ಕೋಽಪಿ ವಿಪ್ರಃ ಸಮಾಯಾತ್ ॥ ೪೯ ॥

ಆ ಜ್ಯೋತಿರ್ವಿದ್ವಾಂಸರು ಕೂಡಲೇ ಇನ್ನೊಂದು ಶುಭ ಮುಹೂರ್ತವನ್ನು ತೋರಿಸಿದರು. ಆದರೆ ಆಗಲೂ ಸಹ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಆಸಕ್ತರಾಗಿರಲಿಲ್ಲ. ಎಲ್ಲ ಜನರು ಖಿನ್ನರಾಗಿದ್ದರು. ಆಗ ಬಿಳಿಯ ವಸ್ತ್ರವನ್ನುಟ್ಟಿರುವ ಒಬ್ಬ ಬ್ರಾಹ್ಮಣರು (ಕೊಪ್ಪ ಸ್ವಾಮಿರಾಮಾಚಾರ್ಯರು) ಬಂದರು. ಅವರು ಗುರುಸಾರ್ವಭೌಮರಾದ ಶ್ರೀ ರಾಘವೇಂದ್ರ ಸ್ವಾಮಿಗಳ ಅನುಗ್ರಹದ ಫಲಮಂತ್ರಾಕ್ಷತೆ ಪ್ರಸಾದವನ್ನು ಮಂತ್ರಾಲಯದಿಂದ ತಂದಿದ್ದರು.

ಪ್ರಸಾದೇ ಸಂಪ್ರಾಪ್ತೇ ನಿಜಗುರುವರಸ್ಯಾಥ ಬುಧರಾಟ್
ಪರಂ ಹೃಷ್ಟಃ ಪುತ್ರೋಪನಯನವಿಧಾವಾಸ ರತಿಮಾನ್ ॥

ತದಾನಂದೋದ್ರೇಕಃ ಸಕಲಸುಜನಾನಾಂ ಸಮಜನಿ
ವಿಲಂಬೇ ಹೇತುಶ್ಚ ಪ್ರವಿದಿತ ಇಹಾಭೂನ್ನನು ಜನ್ಯೈಃ ॥ ೫೦ ॥

ಅನಂತರ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ತಮ್ಮ ಗುರುವರ್ಯರ ಪ್ರಸಾದವು ಪ್ರಾಪ್ತವಾಗುತ್ತಿರಲು ಬಹಳವಾಗಿ ಆನಂದ ಹೊಂದಿದವರಾಗಿ ಪುತ್ರನ ಉಪನಯನಮುಹೂರ್ತದಲ್ಲಿ ಕೂಡಲೇ ಆಸಕ್ತರಾದರು. ಆಗ ಎಲ್ಲ ಸಜ್ಜನರಿಗೂ ಆನಂದದ ಉದ್ರೇಕವಾಯಿತು. ಇಷ್ಟೇ ಅಲ್ಲದೆ, ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಏಕೆ ವಿಳಂಬ ಮಾಡುತ್ತಿದ್ದರೆಂಬುದಕ್ಕೆ ಕಾರಣವನ್ನೂ ತಿಳಿದರು.

ಪ್ರಾಪ್ತೇ ಸರ್ವನಿರೀಕ್ಷಿತೇ ಶುಭತಮೇ ತಸ್ಮಿನ್ ಮುಹೂರ್ತೋತ್ತಮೇ
ಲಕ್ಷ್ಮೀರ್ಯಸ್ಯ ಪರಿಗ್ರಹಾದಿವಿವಿಧಸ್ತೋತ್ರಸ್ವನೇ ಮಂಟಪೇ ॥
ಉದ್ಯದ್ಭಾನುನಿಭಸ್ಯ ಮೂರ್ಧನಿ ವಟೋರಂತಃಪಟೇ ನಿಸ್ಸೃತೇ
ಸರ್ವೇ ಮಂತ್ರಮಯಾಕ್ಷತಾನಿಹ ಜನಾ ಭದ್ರಾಶಿಷಾ ನ್ಯಕ್ಷಿಪನ್ ॥ ೫೧ ॥

ಎಲ್ಲರಿಂದಲೂ ನಿರೀಕ್ಷಿತವಾದ ಆ ಶುಭಮುಹೂರ್ತವು ಸಮೀಪಿಸಿದಾಗ, ಮಂಟಪದಲ್ಲಿ 'ಲಕ್ಷ್ಮೀರ್ಯಸ್ಯ ಪರಿಗ್ರಹ' ಮೊದಲಾದ ಸ್ತೋತ್ರಗಳ ಉಚ್ಚಸ್ವರವು ಮೊಳಗಿತು. ಅಂತಃಪಟವನ್ನು ಸರಿಸುತ್ತಿದ್ದ ಹಾಗೆ ಎಲ್ಲರೂ ಸುಮಂಗಳ ಆಶೀರ್ವಾದದಿಂದ ಮಂತ್ರಾಕ್ಷತೆಗಳನ್ನು, ಉದಯಿಸುವ ಸೂರ್ಯನಂತೆ ಶೋಭಿಸುವ ಆ ವಟುವಿನ ಶಿರಸ್ಸಿನಲ್ಲಿ ಹಾಕಿದರು.

ಧನ್ಯೋ ಯತ್ರ ಬಭುರ್ಬುಧಾಃ ಶುಭಧಿಯೋ ಬ್ರಹ್ಮೋಪದೇಶೋತ್ಸವೋ
ಧನ್ಯಾ ಸಾ ಜನನೀ ಸುತಂ ಶುಭಮತಿಂ ಯಾಽಸೂತ ದಿವ್ಯಾಕೃತಿಮ್ ॥
ಧನ್ಯೋಽಯಂ ಜನಕಶ್ಚಕಾರ ಖಲು ಯಸ್ತಸ್ಯೋಪನೀತಿಂ ವಟೋಃ
ಧನ್ಯೋ ಧನ್ಯಜನೋ ವಟುಸ್ಸ ಇತಿ ಯೋ ವಕ್ತಾ ಚ ಧನ್ಯೋಽಭವತ್ ॥ ೫೨ ॥

ಯಾವ ಉತ್ಸವದಲ್ಲಿ ಸಜ್ಜನರಾದ ವಿದ್ವಾಂಸರು ಸೇರಿದ್ದರೋ ಆ ಬ್ರಹ್ಮೋಪದೇಶ ಮಹೋತ್ಸವವೇ ಧನ್ಯವು. ಯಾರು ದಿವ್ಯವಾದ ಆಕಾರವುಳ್ಳ ಒಳ್ಳೆ ಬುದ್ಧಿವಂತನಾದ ಆ ಪುತ್ರನನ್ನು ಪಡೆದಳೋ ಆ ತಾಯಿಯೇ ಧನ್ಯಳು. ಅಂತಹ ಬಾಲಕನಿಗೆ ಯಾರು ಉಪನಯನವನ್ನು ಮಾಡಿದರೋ ಅಂತಹ ತಂದೆಯೇ ಧನ್ಯರು. ಇಂತಹ ಧನ್ಯರಾದ ತಂದೆತಾಯಿಗಳನ್ನು ಹೊಂದಿದ ಈ ವಟುವೇ ಧನ್ಯನು. ಇಷ್ಟೇ ಅಲ್ಲದೆ, ಹೀಗೆ ಯಾರು ಉದ್ಗಾರ ತೆಗೆದರೋ ಅಂಥ ಜನರೂ ಧನ್ಯರಾದರು.

ಬಾಲ್ಯೇ ಗೃಹವ್ಯಾಪ್ತನುತಿಸ್ವನೋಽಯಂ ಚಕ್ರೇಽಥವೇದಾಧ್ಯಯನಸ್ವನೇನ ॥
ಧನ್ಯಂ ನಿಜಂ ಸಂವಸಥಂ ವಿಚಿತ್ರಂ ತಲ್ಲೋಕಧನ್ಯತ್ವಕರಧ್ವನೇಃ ಕಿಮ್ ॥ ೫೩ ॥

ಬಾಲ್ಯದಲ್ಲಿ ಮನೆಯಲ್ಲ ತುಂಬುವಂತೆ ಸ್ತೋತ್ರಪಾಠಾದಿಗಳ ಧ್ವನಿಯನ್ನು ಮಾಡುವ ಆ ವಟು ಆನಂತರ ಕೌಮಾರಾವಸ್ಥೆಯಲ್ಲಿ ವೇದಪಾಠದ ಸುಸ್ವರದಿಂದ ತನ್ನ ಊರನ್ನೇ ಧನ್ಯವನ್ನಾಗಿ ಮಾಡಿದ. ಲೋಕಕ್ಕೆಲ್ಲ ಧನ್ಯತೆಯನ್ನು ನೀಡುವ ಧ್ವನಿಯುಳ್ಳ ಈ ಸಾತ್ವಿಕಾಚಾರ್ಯರ ಪುತ್ರನಿಗೆ ಇದು ಏನು ಆಶ್ಚರ್ಯದ ಸಂಗತಿ!

**ಸುಮಧ್ವಕಾವ್ಯಂ ಗುರುರಾಜಕಾವ್ಯಂ**
**ದಶಾರ್ಧಕಾವ್ಯಾನಿ ಪರಾಣಿ ಸರ್ವಮ್ ॥**
**ಕ್ಷಣಾರ್ಧತಃ ಕಂಠಗಮಾದಧಾನಂ**
**ತಮೀಕ್ಷಿತುರ್ಮುನ್ನ ಪಿತುಃ ಕಥಂ ಸ್ಯಾತ್** ॥ ೫೪ ॥

ಶ್ರೀ ಸುಮಧ್ವವಿಜಯಕಾವ್ಯ, ಶ್ರೀ ಮಧ್ವಾಚಾರ್ಯರಿಂದ ಕೃತವಾದ ಸಮಗ್ರ ಮಹಾಭಾರತ ತಾತ್ಪರ್ಯನಿರ್ಣಯ, ಮತ್ತು ಗುರುರಾಜರ (ಶ್ರೀ ವಾದಿರಾಜರ) ರುಕ್ಮಿಣೀಶ ವಿಜಯ ಕಾವ್ಯ ಹಾಗೂ ಬೇರೆ ಪಂಚಕಾವ್ಯಗಳು ಇವೆಲ್ಲವನ್ನು ಕ್ಷಣಾರ್ಧದಲ್ಲಿಯೇ (ಶೀಘ್ರವಾಗಿ) ಕಂಠಸ್ಥವನ್ನಾಗಿ ಮಾಡುತ್ತಿರುವ ಈ ಪುತ್ರನನ್ನು ನೋಡುವ ತಂದೆಗೆ ಆನಂದವಾಗದೇ ಇದ್ದೀತೆ?

**ಸಾಹಿತ್ಯಶಾಬ್ದಾಬ್ಧಿಚರಃ ಕುಮಾರಃ**
**ತಾತೋಕ್ತಿನೌಕಾನಿಲಯೋಽನಪಾಯಃ ॥**
**ಶಾಲಾಂ ಸ ಗಚ್ಛನ್ ಪ್ರತಿಭಾಂ ವಿಶಾಲಾಂ**
**ಪ್ರಾದರ್ಶಯತ್ ಕನ್ನಡಕಾವ್ಯಕೃತ್ಯಾ** ॥ ೫೫ ॥

ಈ ಕುಮಾರನು ಸಾಹಿತ್ಯ ವ್ಯಾಕರಣಗಳೆಂಬ ಸಮುದ್ರದಲ್ಲಿ ಸಂಚರಿಸಲಾರಂಭಿಸಿದನು. ತಂದೆಯ ಮಾತುಗಳೆಂಬ ದೋಣಿಯನ್ನು ಆಶ್ರಯಿಸಿದ್ದರಿಂದ ಅಪಾಯವಿಲ್ಲದೇ ಮುನ್ನಡೆಯುತ್ತಿದ್ದ. ಅಲ್ಲದೇ ಕನ್ನಡ ಶಾಲೆಗೆ ಹೋಗುತ್ತಿದ್ದ. ಆಗ "ಪಾರ್ವತೀಪರಿಣಯ ಚಂಪೂ" ಎಂಬುವ ಸ್ವತಂತ್ರ ಕನ್ನಡ ಕಾವ್ಯವನ್ನು ರಚಿಸಿ ತನ್ನ ವಿಶಾಲವಾದ ಪ್ರತಿಭೆಯನ್ನು ತೋರಿಸಿದ್ದನು.

**ದ್ವಿಷಟ್‌ಶರದ್ಯಾಜ್ಞಿಕಕರ್ಮಸಂವಿತ್**
**ಸ ಕಾರಯನ್ ಕರ್ಮ ವಿವಾಹಪೂರ್ವಮ್ ॥**
**ಪ್ರದತ್ತಧಾನ್ಯಾದಿ ಧರನ್ ಪಿತೃಭ್ಯಾಂ**
**ದದದ್ದದೌ ತದ್ದ್ವಿಗುಣಂ ಪ್ರಮೋದಮ್** ॥ ೫೬ ॥

ಆ ಕುಮಾರನಿಗೆ ಆಗ ಹನ್ನೆರಡುವರ್ಷ. ಇಷ್ಟರಲ್ಲಿಯೇ ಯಾಜ್ಞಿಕ ಕ್ರಿಯೆಗಳನ್ನೆಲ್ಲಾ ಚೆನ್ನಾಗಿ ಬಲ್ಲವನಾಗಿದ್ದ. ವಿವಾಹಾದಿ ಉತ್ಸವಗಳನ್ನು ಮಾಡಿಸುತ್ತಿದ್ದ. ಅಲ್ಲಿ ತನಗೆ ನೀಡಿದ ಧಾನ್ಯಾದಿಗಳನ್ನೆಲ್ಲಿ ಹೊತ್ತುಕೊಂಡು ತಂದು ತಂದೆ ತಾಯಿಗಳಿಗೆ ಕೊಡುವುದರ ಜೊತೆಗ ಅದಕ್ಕೂ ಎರಡು ಪಟ್ಟು ಹೆಚ್ಚಾದ ಪರಮಾನಂದವನ್ನು ಕೊಡುತ್ತಿದ್ದನು.

ಕ್ಷೇತ್ರೇ ಖನಿತ್ರೇಣ ಕೃತಶ್ರಮೋಽಲಂ
ಶ್ವಾಣಾಂಬುಮಾತ್ರೇಣ ಹಸನ್ಮುಖೋಽಯಮ್ ॥
ಜಗತ್ಪತೇರ್ಭಕ್ತಿವಿಭೂತಿಹೇತುಂ
ದಾರಿದ್ರ್ಯದೋಷಂ ಗುಣಮೇವ ಮೇನೆ ॥ ೫೭ ॥

ಹೊಲದಲ್ಲಿ ಗುದ್ದಲಿಯಿಂದ ಶ್ರಮಿಸುತ್ತಿದ್ದ ಈ ಕುಮಾರನು ಕೇವಲ ನುಚ್ಚು ನೀರುಗಳಿಂದ ಹಸನ್ಮುಖನಾಗಿದ್ದನು. ಜಗತ್ತಿಗೆ ಸ್ವಾಮಿಯಾದ ಶ್ರೀ ಹರಿಯ ಭಕ್ತಿಯೆಂಬ ಸಂಪತ್ತಿಗೆ ಕಾರಣವಾದ್ದರಿಂದ ದಾರಿದ್ರ್ಯ ದೋಷವನ್ನು ಗುಣವೆಂದೇ ಭಾವಿಸಿದ್ದನು.

ಅಥೈಕದಾ ಮೋದಪುರಃ ಸಮೀಪೇ
ವನಂ ತುಲಸ್ಯಾನಯನಾಯ ಗಚ್ಛನ್ ॥
ಪಿತ್ರಾನುಶಿಷ್ಟಃ ಸ ಪುರಸ್ಥಿತೇನಾಪಶ್ಯದ್ಯತಿಂ
ಕಂಚನ ಕಾಂಚನಾಭಮ್ ॥ ೫೮ ॥

ಅನಂತರ ಒಮ್ಮೆ ಆ ಕುಮಾರನು ತಮ್ಮ ತಂದೆಗಳೊಂದಿಗೆ ಕಿನ್ನಾಳ ಗ್ರಾಮಕ್ಕೆ ಹೋಗಿರುವ ಸಂದರ್ಭ. ಅಲ್ಲಿ ತಂದೆಗಳ ಅಪ್ಪಣೆಯಂತೆ ತುಲಸಿಯನ್ನು ತರುವುದಕ್ಕಾಗಿ ಮಾದನೂರಿನ ಬಳಿಯಿರುವ ವನಕ್ಕೆ ಬಂದಿದ್ದಾಗ ಅಲ್ಲಿ ಒಬ್ಬ ಯತಿಗಳನ್ನು ನೋಡಿದನು. ಅವರು ಒಳ್ಳೆ ಸುವರ್ಣದಂತೆ ಕಂಗೊಳಿಸುತ್ತಿದ್ದರು.

ಅದೃಷ್ಟಪೂರ್ವೇಣ ಚ ತೇನ ಕಿಂ ತೇ
ಜ್ಞಾನಂ ಧನಂ ವೇಷ್ಟಮಿತೀಹ ಪೃಷ್ಟಃ ॥
ಜ್ಞಾನಂ ಸ ವವ್ರೇ ಪ್ರಣಮನ್ ಕುಮಾರಃ
ಯತೀಶಮಾದಿತ್ಯವದಾಯತಾಂಶುಮ್ ॥ ೫೯ ॥

ಹಿಂದೆಂದೂ ಎಲ್ಲಿಯೂ ಅವರನ್ನು ನೋಡಿರಲಿಲ್ಲ. ಆ ಯತಿಗಳು "ನಿನಗೆ ಜ್ಞಾನವು ಇಷ್ಟವೋ? ಅಥವಾ ಧನವೋ?" ಎಂದು ಕೇಳಿದಾಗ ಸೂರ್ಯನಂತೆ ಕಂಗೊಳಿಸುವ ಆ ಯತಿಗಳಿಗೆ ಪ್ರಣಾಮಮಾಡುತ್ತ ಆ ಕುಮಾರನು ಜ್ಞಾನವನ್ನೇ ಇಷ್ಟವೆಂದು ವರ ಕೇಳಿಕೊಂಡನು.

ಶ್ರುತ್ವಾಥ ವೃತ್ತಾಂತಮಿದಂ ಸುತೋಕ್ತಂ
ಶ್ರೀವಿಷ್ಣುತೀರ್ಥಾರ್ಯವರಪ್ರಸಾದಃ ॥
ಪ್ರಾಪ್ತಃ ಸುತೇನೇತಿ ಪಿತಾಪ ಮೋದಂ
ಗುರುಪ್ರಸಾದೋ ಹಿ ಸದಾ ಸದರ್ಥ್ಯಃ ॥ ೬೦ ॥

ಆನಂತರ ತಂದೆಗಳಾದ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರು ಪುತ್ರನು ಹೇಳುವ ಈ ಎಲ್ಲ ವೃತ್ತಾಂತವನ್ನು ಕೇಳಿ ಬಹಳ ಆನಂದವನ್ನು ಹೊಂದಿದರು. ಕಾರಣ ಶ್ರೀವಿಷ್ಣುತೀರ್ಥ ಗುರುವರ್ಯರ ಅನುಗ್ರಹವು

ಪುತ್ರನಿಗೆ ಆಯಿತೆಂದು ಭಾವಿಸಿದ್ದರು. ಸಜ್ಜನರಿಗೆ ಗುರುಪ್ರಸಾದವು ಮಾತ್ರವೇ ಸದಾ ಅಪೇಕ್ಷಿತವಾಗಿದೆಯಷ್ಟೆ.

**ದುರ್ಲಭ್ಯಾಮಥ ಬಂಧುತಾಂ ಬುಧವರಶ್ರೀಸಾತ್ವಿಕಾರ್ಯೇಶಿತುಃ**
**ತಿಮ್ಮಣ್ಣಾರ್ಯ ಇಯಾಯ ಪುಣ್ಯಧನವಾನ್ ಭಾಗ್ಯಂ ಕಿಮಸ್ಯೋಚ್ಯತೇ ॥**
**ಅಭ್ಯಸ್ತಾಖಿಲಕಾವ್ಯಶಾಬ್ದಕೃತಯೇ ಶ್ರೀ ಶ್ರೀನಿವಾಸಾಯ ಯಃ**
**ಗೌರೀವಲ್ಲಸಿತಾಂ ಪ್ರದಾಯ ತನಯಾಂ ಭೇಜೇ ನಿಜೇ ಧನ್ಯತಾಮ್ ॥ ೬೧ ॥**

ಅನಂತರ, ಶ್ರೇಷ್ಠ ಜ್ಞಾನಿಗಳಾದ ಶ್ರೀ ಸಾತ್ವಿಕಾಚಾರ್ಯರ ಬಾಂಧವ್ಯವನ್ನು 'ಹನುಮಸಾಗರ' ಗ್ರಾಮದ 'ಪುರೋಹಿತ' ತಿಮ್ಮಣ್ಣಾಚಾರ್ಯರೆಂಬುವರು ಹೊಂದಿದರು. ಅವರ ಬಾಂಧವ್ಯವು ದುರ್ಲಭವಾಗಿದ್ದರೂ, ತಿಮ್ಮಣ್ಣಾಚಾರ್ಯರು ಪುಣ್ಯವೆಂಬ ಧನವುಳ್ಳವರಾದ್ದರಿಂದ ಅವರಿಗೆ ಸುಲಭವಾಯಿತು. ಸಕಲ ಕಾವ್ಯಗಳನ್ನು ವ್ಯಾಕರಣಗಳನ್ನು ಅಭ್ಯಾಸ ಮಾಡಿರುವ (ಶ್ರೀಸಾತ್ವಿಕಾಚಾರ್ಯರ ಪುತ್ರರಾದ ) ಶ್ರೀ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರಿಗೆ ಗೌರೀಯಂತೆ ಶೋಭಿಸುವ ಎಂಟು ವರ್ಷದವಳಾದ ತಮ್ಮ ಮಗಳನ್ನು ಕೊಡುವುದರಿಂದ ತಿಮ್ಮಣ್ಣಾಚಾರ್ಯರು ತಮ್ಮಲ್ಲಿ ಸಾರ್ಥಕತೆಯನ್ನು ಹೊಂದಿದ್ದರು.

**ಆಯಾಸೀದ್ದ್ವಿಜಜನಜೀವಜಾಲಿಹಾಳಂ**
**ಸದ್ಧ್ಯಾನಾಭಿಧಬುಧರಾಜ್ಯರಾಜಹಂಸಃ ॥**
**ಬುದ್ಧ್ಯೃದ್ಧಿಬುಧವಿಶುದ್ಧಿದಾ ವಿಶುದ್ಧಾ**
**ಯದ್ವಿದ್ಯಾ ದ್ಯುಭವನದೀವ ದಿದ್ಯುತೇಽದ್ಯ ॥ ೬೨ ॥**

ಆನಂತರದಲ್ಲಿ ದ್ವಿಜಜನರಿಗೆ ಜೀವದಂತಿರುವ ಈ ಜಾಲಿಹಾಳ ಗ್ರಾಮಕ್ಕೆ ಶ್ರೀಸತ್ಯಧ್ಯಾನತೀರ್ಥರೆಂಬ ಪಂಡಿತರ ರಾಜ್ಯಕ್ಕೆ ರಾಜರಾದ ಯತಿಗಳು ಆಗಮಿಸಿದರು. ಸಜ್ಜನರಾದ ವಿದ್ವಾಂಸರ ಬುದ್ಧಿಗೆ ಶುದ್ಧತೆಯನ್ನು ನೀಡುವ ನಿರ್ಮಲವಾದ ಅವರ ವಿದ್ಯೆಯು ಇಂದೂ ಸಹ ಗಂಗೆಯಂತೆ ಕಂಗೊಳಿಸುತ್ತಿದೆ. (ಇಲ್ಲಿಂದ ೭೫ ನೇ ಶ್ಲೋಕದ ವರೆಗೆ ಆದಿಕುಲಕ)

**ಶ್ರೀಮಧ್ವಾಂಬುಧಿಭವಭಾರತಾಮೃತಾರ್ಥ -**
**ಸೇವಾಸತ್ಸ್ಥಲಗಮನೇಕ್ಷಣಾದಿಲಬ್ಧಃ ॥**
**ಕೃಷ್ಣಾಂಬಾರಮಣಜಯಾರ್ಯಪಾಣಿಪೂರ್ಣಃ**
**ಯೋ ರೇಜೇ ಸುತವರವದ್ಧರಿಪ್ರಸಾದಃ ॥ ೬೩ ॥**

ಶ್ರೀ ಮಧ್ವಾಚಾರ್ಯರೆಂಬ ಸಮುದ್ರದಲ್ಲಿ ಆವಿರ್ಭಾವಹೊಂದಿದ ಶ್ರೀ ಮಹಾಭಾರತ ತಾತ್ಪರ್ಯ ನಿರ್ಣಯವೆಂಬ ಅಮೃತವನ್ನು ಪಾನಮಾಡುತ್ತಾ , ಶ್ರೇಷ್ಠ ತೀರ್ಥಕ್ಷೇತ್ರ ಯಾತ್ರೆಯಿಂದ ಬಂದಂಥ ಶ್ರೀಹರಿ ಪ್ರಸಾದವು ಪುತ್ರರೂಪದಿಂದ ಕೃಷ್ಣಾಬಾಯಿ ಜಯಾಚಾರ್ಯರ ಹಸ್ತಗಳಲ್ಲಿ ತುಂಬಿತ್ತು. ಅಂಥ ಪುತ್ರರೂಪದ ಹರಿಪ್ರಾಸಾದವೇ ಈ ಯತಿಗಳು.

ಬಾಲ್ಯೇऽಹಿಪ್ರತತಫಣಾತಪತ್ರಮೌಲಿಃ
ಯಸ್ತಪ್ತಾಪ್ರತಿಮಸುವರ್ಣವರ್ಣಕಾಯಃ ॥
ರೇಜೇऽಥ ಶ್ವಸನಸುವರ್ಣಪೂರ್ಣಕಾಯಃ
ಟೀಕಾಕೃದ್ವಚನಫಣಾತಪತ್ರಮೌಲಿಃ ॥ ೬೪ ॥

ಬಾಲ್ಯದಲ್ಲಿ ಯಾರ ಶಿರಸ್ಸಿನ ಮೇಲೆ ಹಾವಿನ ಹೆಡೆಯು ಛತ್ರಿಯಂತೆ ಇತ್ತೋ, ಅವರಿಗೆ ಬಾಲ್ಯದನಂತರವೂ ಟೀಕಾಚಾರ್ಯರ (ಶ್ರೀ ಜಯತೀರ್ಥರ) ವಚನಗಳೆಂಬ ಹಾವಿನ ಹೆಡೆಗಳು ಛತ್ರಿಯಂತೆ ಶಿರಸ್ಸಿನ ಮೇಲೆ ಶೋಭಿಸುತ್ತಿತ್ತು. ಯಾರ ದೇಹವು ಬಾಲ್ಯದಲ್ಲಿ ಕಾದಂತಹ ಬಂಗಾರದಂತೆ ವರ್ಣ (ಬಣ್ಣ)ವನ್ನು ಹೊಂದಿತ್ತೋ, ಅಂತಹ ಶ್ರೀಸತ್ಯಧ್ಯಾನತೀರ್ಥರಿಗೆ ಬಾಲ್ಯಾನಂತರವೂ ಸಹ ದೇಹದಲ್ಲಿ ಶ್ರೀಮದಾಚಾರ್ಯರ ಸುವರ್ಣಗಳು ತುಂಬಿತ್ತು.

ಯೋ ವೃದ್ಧೌ ಕುಮುದಪತಿಪ್ರಭಶ್ಚ ಪದ್ಯ –
ಪಾಠೇನ ಪ್ರಮದಕರಸ್ಸದಾ ಸ್ವಪಿತ್ರೋಃ ॥
ಸದ್ವೃಂದಾಕ್ಷಿಕುಮುದವೃದ್ಧಿದಶ್ಚ ಪಶ್ಚಾತ್
ಪಾಠೇನ ಪ್ರಮದದ ಆಸ ಲೋಕಪಿತ್ರೋಃ ॥ ೬೫ ॥

ಯಾರು ಬಾಲ್ಯದಲ್ಲಿ ಕುಮುದ ರಾಜನಾದ ಚಂದ್ರನಂತೆ ಅಭಿವೃದ್ಧಿ ಹೊಂದುತ್ತಾ ಪದ್ಯಗಳ ಪಠನದಿಂದ ತನ್ನ ತಂದೆ ತಾಯಿಗಳಿಗೆ ಆನಂದ ನೀಡುತ್ತಿದ್ದರೋ, ಅವರೇ ಆನಂತರ ಸಜ್ಜನರ ಕಂಗಳೆಂಬ ಕುಮುದಗಳಿಗೆ ಅಭಿವೃದ್ಧಿಯನ್ನು ನೀಡುತ್ತ, ತನ್ನ ಪಾಠಪ್ರವಚನಗಳಿಂದ ಲೋಕಕ್ಕೇ ತಂದೆತಾಯಿಗಳಾದ ಶ್ರೀ ಲಕ್ಷ್ಮೀನಾರಾಯಣರಿಗೆ ಆನಂದವನ್ನು ನೀಡುತ್ತಿದ್ದರು. (ಅಂಥ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರು ಆಗಮಿಸಿದ್ದರು).

ಯಃ ಪ್ರಾಪ್ತೋಪನಯನಬಾಲಕೋऽಥ ಬಾಲ –
ಮೌಲೀನಾಂ ನಯನವದಾಸ್ತ ಶಾಸ್ತ್ರದೃಷ್ಟ್ಯಾ ॥
ಸಂಧ್ಯಾದ್ಯೈಃ ಸ್ವನಿಯತಕರ್ಮಭಿಶ್ಚ ನಿತ್ಯಂ
ಯಃ ಪ್ರಾಕಾಶತ ಜಿತಚಿತ್ರಭಾನುಭಾನುಃ ॥ ೬೬ ॥

ಯಾವ ಬಾಲಕ ಉಪನಯನ ಹೊಂದಿದನೋ, ಆನಂತರ ಅವರೇ ಬಾಲಕಶ್ರೇಷ್ಠರಿಗೆ ಸಚ್ಛಾಸ್ತ್ರದರ್ಶನಕ್ಕಾಗಿ ನಯನದಂತೆ ವಿರಾಜಿಸುತ್ತಿದ್ದರು. ತನ್ನ ನಿಯತವಾದ ಸ್ನಾನ ಸಂಧ್ಯಾವಂದನಾದಿಗಳಿಂದ ಸೂರ್ಯನ ಕಾಂತಿಯನ್ನು ಗೆದ್ದಿರುವರಂತೆ ಶೋಭಿಸುತ್ತಿದ್ದರು. (ಅಂಥ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರು ಆಗಮಿಸಿದ್ದರು).

**ರಾಮಾರ್ಯಾದಸದೃಶತರ್ಕಕರ್ಕಶೋಕ್ತೀಃ**
**ಭಾಷ್ಯೋಕ್ತೀಃ ಸ್ವಪಿತುರಧೀತ್ಯ ದಿವ್ಯಶಕ್ತಿಃ ||**
**ಯೋಜೇಽಯೋಽಖಿಲಜಿದಭೂದ್ಧಿ ಸೇತುರಾಮಃ**
**ಸಂಸಾರಾರ್ಣವತರಣೇಽಥ ರಾಮಸೇತುಃ** || ೬೭ ||

ರಂಗಂ ಪೇಟೆ ರಾಮಾಚಾರ್ಯರಿಂದ ಅಸದೃಶವಾದ ಕರ್ಕಶವಾದ ತರ್ಕಶಾಸ್ತ್ರವನ್ನು, ತಮ್ಮ ತಂದೆಯಿಂದ ಭಾಷ್ಯವನ್ನೂ ಅಧ್ಯಯನಮಾಡಿದ, ಅಸದೃಶ ಬುದ್ಧಿಶಕ್ತಿಯುಳ್ಳ ಯಾವ ಸೇತುರಾಮಾಚಾರ್ಯರು ವಾದದಲ್ಲಿ ಅಜೇಯರಾಗಿ ಸಕಲರನ್ನು ಗೆಲ್ಲುತ್ತಿದ್ದರೋ ಅವರೇ ಆನಂತರ ಸಂಸಾರ ಸಾಗರವನ್ನು ದಾಟಲು ರಾಮಸೇತುವಿನಂತೆ ಆದರು. (ಅಂಥ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರು ಆಗಮಿಸಿದ್ದರು).

**ಯಃ ಕೃಷ್ಣಾತಟನಿಕಟೇ ವಸನ್ ಸಭಾರ್ಯಃ**
**ಶೈಕ್ಷ್ಯಾಣಾಮಸದೃಶಶಿಕ್ಷಕೋಽಥ ರೇಜೇ ||**
**ಪ್ರೇಕ್ಷಾವತ್ಸುಮತಿಪರೀಕ್ಷಕಃ ಸಭಾರ್ಯಃ**
**ಶ್ರೀಕೃಷ್ಣಾರುಣಚರಣಾಬ್ಜಭೃಂಗರಾಜಃ** || ೬೮ ||

ಶ್ರೀ ಕೃಷ್ಣವೇಣಿ ನದಿಯ ದಡದಲ್ಲಿ ಸಭಾರ್ಯರಾಗಿ (ಭಾರ್ಯೆಯಿಂದ ಸಹಿತರಾಗಿ) ವಾಸಮಾಡುತ್ತಾ ಯಾರು ಶಿಷ್ಯರಿಗೆ ಅಸದೃಶ ಶಿಕ್ಷಣವನ್ನು ನೀಡುತ್ತಿದ್ದರೋ. ಅವರೇ ಆನಂತರ ಶ್ರೀ ಕೃಷ್ಣನ ಕೆಂಪಾದ ಪಾದಾರವಿಂದಗಳಲ್ಲಿ ಭೃಂಗರಾಜನಂತೆ ವರ್ತಿಸುತ್ತಾ ಸಭಾರ್ಯರಾಗಿ (ಸಭೆಗೆ ಆರ್ಯರಾಗಿ) ಎಲ್ಲ ಬುದ್ಧಿವಂತರ ಬುದ್ಧಿಯನ್ನು ಪರೀಕ್ಷಿಸುತ್ತ ಶೋಭಿಸುತ್ತಿದ್ದರು. ( ಅಂಥ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರು ಆಗಮಿಸಿದ್ದರು)

**ಯಚ್ಛಿಷ್ಯೋ ಗುರುರಪಿ ಸದ್ಯತೀ ಸಮಾಸ್ತಾಂ**
**ಮಧ್ಯಸ್ಥಃ ಸ ಚ ಯತಿರೇವ ನೂನಮಾಸ್ತಾಮ್ ||**
**ಇತ್ಥಂ ಭೂಸುರವರವರ್ಣಿತೋರುಕೀರ್ತಿಃ**
**ಯೋಽಟಿರಾಜೀತ್ ಕುಮತನೃಪೋಗ್ರರಾಮಮೂರ್ತಿಃ** || ೬೯ ||

"ಯಾರ ಶಿಷ್ಯರು ಹಾಗು ಗುರುಗಳು ಇಬ್ಬರೂ ಶ್ರೇಷ್ಠ ಯತಿಗಳಾಗಿದ್ದರೋ, ಅಂಥ ಈ (ಸೇತುರಾಮಾಚಾರ್ಯರು) ಮಧ್ಯಸ್ಥರೂ ಸಹ ಯತಿಗಳೇ ಆಗಲಿ" ಎಂದು ಭೂಸುರವರ್ಯರಿಂದ ಶ್ಲಾಘಿತವಾದ ಯಶಸ್ಸುಳ್ಳ ಈ ಸೇತುರಾಮಾಚಾರ್ಯರು ಸನ್ಯಾಸಿಗಳಾಗಿ ದುರ್ಮತಗಳೆಂಬ ಕ್ಷತ್ರಿಯರಿಗೆ ಉಗ್ರರಾಮನಂತೆ (ಪರಶುರಾಮ) ಶೋಭಿಸಿದರು.

ಯೋ ಮಾಯಾಸಮಯಮಥಾಖಿಲಂ ಗಯಾಯಾಂ
ಬೌದ್ಧೋಕ್ತಂ ಶ್ರುತಿಶತಗರ್ಹಿತಂ ಚ ತನ್ವನ್ ॥
ಮಧ್ವೋಕ್ತೇಃ ಖಲಕಲಿತಾಪ್ರಸಿದ್ಧಿಹಾರೀ
ತತ್ರಾಭಾದಭಿನವತತ್ಪ್ರಸಿದ್ಧಿಧಾರೀ ॥ ೭೦ ॥

ಆನಂತರ ಗಯಾದಲ್ಲಿ ಸಮಸ್ತ ಅದ್ವೈತಮತವನ್ನು ಬೌದ್ಧಮತವೆಂದು, ಅನೇಕ ವೇದಗಳಿಂದ ನಿಂದಿತವೆಂದು ಯಾರು ನಿರೂಪಿಸಿದರೋ, ಹಾಗೂ ಶ್ರೀಮಧ್ವರಾಯರ ವಚನಗಳಿಗೆ ದುಷ್ಟರು ಆರೋಪಿಸಿದ ಅಪ್ರಸಿದ್ಧಿಯನ್ನು ಪರಿಹರಿಸಿ, ಮಧ್ವ (ಆನಂದತೀರ್ಥ) ಎಂಬ ಹೆಸರಿನ ಅಭಿನವ ಪ್ರಸಿದ್ಧಿಯನ್ನು ಧರಿಸಿ (ಅಭಿನವ ಆನಂದತೀರ್ಥರೆನಿಸಿ) ಶೋಭಿಸಿದರೋ. ಅಂಥಾ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರು ಆಗಮಿಸಿದ್ದರು.

ದುರ್ಮಿಥ್ಯಾಸಮಯತಮಸ್ಯಕೃಷ್ಣಪಕ್ಷೇ
ಸಂವೃದ್ಧಂ ಶಿವಸುತಧೀರತಾರಕೇಂದ್ರಮ್ ॥
ಧಿಕ್ಕುರ್ವನ್ ಮಿತವಿತತಾರ್ಥದಸ್ವಗೋಭಿಃ
ಯಃ ಕಾಶ್ಯಾಂ ವಿಶದನಿಶೇಶವಚ್ಚಕಾಶೇ ॥ ೭೧ ॥

ದುಷ್ಟವಾದ ಮಿಥ್ಯಾಮತವೆಂಬ ಕತ್ತಲೆಯಲ್ಲಿ ಅಕೃಷ್ಣಪಕ್ಷದಲ್ಲಿ ( ಕೃಷ್ಣಸರ್ವೋತ್ತಮತ್ವವನ್ನು ಬಿಟ್ಟಿರುವ ಪಕ್ಷವೆಂಬ ಶುಕ್ಲಪಕ್ಷದಲ್ಲಿ ) ಬೆಳೆದಂಥ ಶಿವಕುಮಾರಶಾಸ್ತ್ರಿಯೆಂಬ, ಪಂಡಿತರೆಂಬ ನಕ್ಷತ್ರಗಳಿಗೆ ನಾಥನಾದ, ಚಂದ್ರನನ್ನು ಯಾರು ತಮ್ಮ ಮಿತವಾದ, ವಿಸ್ತಾರವಾದ ಅರ್ಥಪ್ರಕಾಶಕೊಡುವ ಮಾತೆಂಬ ಕಿರಣಗಳಿಂದ ಧಿಕ್ಕರಿಸುತ್ತಾ, ಕಾಶಿಯಲ್ಲಿ ಆಗತಾನೆ ಪ್ರವೇಶಿಸುವ ಸೂರ್ಯನಂತೆ ಶೋಭಿಸಿದರೋ ಅಂಥ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರು ಆಗಮಿಸಿದ್ದರು.

ವ್ಯಾಸಾಬ್ಧ್ಯುತ್ಥಿತಕೃತಿರಾತ್ರಿಪಂ ಗ್ರಹೀತುಂ
ಪ್ರೋದ್ಯುಕ್ತಂ ದಿತಿಸುತರಾಮಸುಬ್ಬರಾಹುಂ ॥
ಯೋ ರುಂಧನ್ ನವಹನುಮಾನಿವ ಸ್ವದಿವ್ಯ -
ವೀರ್ಯೇಣಾವನಿದಿವಿಷನ್ನಿಷೇವಿತೋಽಭೂತ್ ॥ ೭೨ ॥

ಶ್ರೀ ವ್ಯಾಸರಾಜರೆಂಬ ಸಮುದ್ರದಲ್ಲಿ ಉದಯಿಸಿದ ಚಂದ್ರಿಕಾ ಎಂಬ ಚಂದ್ರನನ್ನು ಹಿಡಿಯಬೇಕೆಂದು ಪ್ರವೃತ್ತನಾದ ರಾಮಸುಬ್ಬಶಾಸ್ತ್ರಿಯೆಂಬ ದೈತ್ಯ ರಾಹುವನ್ನು ಯಾರು ತಮ್ಮ ದಿವ್ಯಪರಾಕ್ರಮದಿಂದ ತಡೆಯುತ್ತಾ ಅಭಿನವ ಹನುಮಂತನ ಹಾಗೆ ಭೂದೇವತೆಗಳಿಂದ ವಂದಿತರಾಗಿ ಶೋಭಿಸಿದರೋ, ಅಂಥ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರು ಆಗಮಿಸಿದ್ದರು.

ಸಂಚಾರೀ ಮಹಿಷಪುರೇ ನರೇಶ್ವರೇಡ್ಯಃ
ಗೀತೋಕ್ತಂ ಸದಸಿ ದಧದ್ವಿಭೇದತತ್ತ್ವಮ್ ॥
ವಾಗ್ಬಾಣೈಶ್ಚ ಬಲಮಹೋಬಲಸ್ಯ ಭಿಂದನ್
ಯೋ ದೃಷ್ಟೋಽಂತಕವದನಂತಕೃಷ್ಣದೃಷ್ಟ್ಯಾ ॥ ೭೩ ॥

ಸಂಚರಿಸುತ್ತಾ ಮಹಿಷಪುರಕ್ಕೆ (ಮೈಸೂರು ನಗರಕ್ಕೆ) ಬಂದಾಗ ರಾಜನಿಂದ ಪೂಜ್ಯರಾದ ಯಾರು ಭೇದತತ್ತ್ವವೇ ಗೀತೆಯಲ್ಲಿ ಪ್ರತಿಪಾದಿತವಾಗಿದೆಯೆಂದು ಸಮರ್ಥಿಸಿದರೋ. ಅನಂತರ ತಮ್ಮ ವಾಗ್ಬಾಣಗಳಿಂದ ಅಹೋಬಲ ಮಠಾಧಿಪತಿಯ ಬಲವನ್ನು (ಪಕ್ಷವೆಂಬ ಸೈನ್ಯವನ್ನು) ತುಂಡು ಮಾಡಿದರೋ. ಹಾಗೆಯೇ ಯಾರು ಅನಂತಕೃಷ್ಣಶಾಸ್ತ್ರಿಯ ಕಣ್ಣುಗಳಿಗೆ ವಾದದಲ್ಲಿ ಅಂತಕ(ಯಮ)ನಂತೆ ಕಾಣಿಸಿದರೋ. ಅಂಥ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರು ಆಗಮಿಸಿದ್ದರು.

ದ್ವಾಕೋಟ್ಯಾದಿಷು ಮಧುರೌದನಾಭಿಧಾನಂ
ಸದ್ವಿದ್ಯಾಭಿಧಮಮೃತಂ ಸತಾಂ ದದದ್ಯಃ ॥
ಸ್ವರ್ಲೋಕಾತುಲಕುಲತೋಽಮೃತದ್ವಯೇನ
ಭೂಲೋಕಾನತಿಶಯಿತಾನಿಹಾತತಾನ ॥ ೭೪ ॥

ಬಾಗಲಕೋಟೆ ಮುಂತಾದ ಪ್ರದೇಶಗಳಲ್ಲಿ ಎಲ್ಲ ಸಜ್ಜನರಿಗೆ ಮಧುರವಾದ ಆಹಾರವೆಂಬ ಹಾಗೂ ಸದ್ವಿದ್ಯೆಯೆಂಬ ಅಮೃತವನ್ನು ನೀಡುತ್ತಾ ಯಾರು ಭೂದೇವತೆಗಳನ್ನು ಸ್ವರ್ಗದ ದೇವತೆಗಳಿಗಿಂತ ಎರಡು ಅಮೃತವಿರುವುದರಿಂದ ಶ್ರೇಷ್ಠರನ್ನಾಗಿ ಮಾಡಿದರೋ, ಅಂಥ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರು ಆಗಮಿಸಿದ್ದರು.

ಪೀಠಾಧೀಶ್ವರವರಶಿಷ್ಯಕಸ್ಯ ಯಸ್ಯ
ಜೈತ್ರಂ ಸದ್ರುಚಿರವಿಚಿತ್ರಸಚ್ಚರಿತ್ರಮ್ ॥
ಸಂವಕ್ತುಂ ಸಕಲಮಶಕ್ತ ಏವ ವಿಪ್ರೋ
ಯಾವದ್ಭೂಸುರಗಿರಿ ಭಾತಿ ಭೂಪಶಬ್ದಃ ॥ ೭೫ ॥

ಪೀಠಾಧಿಪತಿಗಳನ್ನೆಲ್ಲ ಶಿಷ್ಯರನ್ನಾಗಿ ಹೊಂದಿದ ಯಾರ, ಜಯಶೀಲವಾದ, ಕರ್ಣಗಳಿಗೆ ಮಧುರವಾದ, ಆಶ್ಚರ್ಯ ನೀಡುವ ಚರಿತ್ರೆಯನ್ನು ಪೂರ್ಣ ವರ್ಣಿಸಲು ಬ್ರಾಹ್ಮಣನು ಯಲ್ಲಿಯವರೆಗೆ ಭೂಸುರ ಎಂಬ ಶಬ್ದದಲ್ಲಿ ಭೂ ಎಂಬ ಉಪಶಬ್ದವು ಇರುವುದೋ ಅಲ್ಲಿಯ ತನಕ ಅಸಮರ್ಥವೇ ಆಗುತ್ತಾನೋ, ಅಂಥ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರು ಆಗಮಿಸಿದ್ದರು.

(ಇಲ್ಲಿ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರ ಪೂರ್ಣ ಚರಿತ್ರೆಯನ್ನು ವರ್ಣಿಸಲು ದೇವತೆಗಳೇ ಸಮರ್ಥರು ಹೊರತು ಭೂದೇವತೆಗಳಲ್ಲ ಎಂದು ಧ್ವನಿತವಾಗುತ್ತದೆ. ಇಲ್ಲಿಗೆ ಕುಲಕವು ಸಮಾಪ್ತವಾಗುತ್ತದೆ.)

ಸನ್ನ್ಯಾಸೀಶ್ವರ ಏಷ ವೀಕ್ಷ್ಯ ಧೀಷಣಾಶಕ್ತ್ಯಾಖಿಲಾನ್ ಬಾಲಕೀ -
ಕುರ್ವದ್ಬಾಲಕಮೌಲಿಮೇತಮತುಲಂ ಶ್ರೀಸಾತ್ವಿಕಾರ್ಯಾತ್ಮಜಮ್ ॥
ಪ್ರಾಪ್ಯಾಶ್ಚರ್ಯಮಥೋ ವಿಚಿಂತ್ಯ ಚತುರಂ ದುಶ್ಶಿಕ್ಷಣೇ ದೀಕ್ಷಿತಂ
ಪೂರ್ಣಪ್ರೇಕ್ಷಣಪಕ್ಷಪೂರ್ಣಭಜನೇ ದಕ್ಷಂ ಚ ನಿನ್ಯೇ ಮಠಮ್ ॥ ೭೭ ॥

ಇಂಥ ಈ ಯತಿವರ್ಯರಾದ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರು ಅಸದೃಶನಾದ ಆ ಸಾತ್ವಿಕಾಚಾರ್ಯರ ಪುತ್ರನನ್ನು ನೋಡಿ ಆಶ್ಚರ್ಯ ಹೊಂದಿದರು. ತನ್ನ ಬುದ್ಧಿಶಕ್ತಿಯಿಂದ ಸಕಲರನ್ನೂ ಬಾಲಕರನ್ನಾಗಿ ಮಾಡುವ ಚತುರನಾದ ಆ ಬಾಲಮೌಲಿಯನ್ನು, ದುರ್ಮತಗಳನ್ನು ಶಿಕ್ಷಿಸುವುದರಲ್ಲಿ ದೀಕ್ಷಿತನನ್ನಾಗಿ ಹಾಗು ಶ್ರೀಪೂರ್ಣಪ್ರಜ್ಞಾಚಾರ್ಯರ ಪಕ್ಷವನ್ನು ಪರಿಪೂರ್ಣವಾಗಿ ಸೇವಿಸುವಲ್ಲಿ ದಕ್ಷನನ್ನಾಗಿಯೂ ತಿಳಿದರು. ಆದ್ದರಿಂದ ಆ ಕೂಡಲೆ ಅವನನ್ನು ಮಠಕ್ಕೆ ಕರೆದೊಯ್ದರು.

ಷಟ್‌ಸಪ್ತವರ್ಷೋ ಸದನೇ ಚ
ತಾತಾದಭ್ಯಸ್ತಕಾವ್ಯಾಮರಶಾಬ್ದವೇದಃ ॥
ಮಠೇಽಪಠತ್ಕರ್ಕಶತರ್ಕಶಾಸ್ತ್ರಂ
ಸ ಧೀರರಾಡ್‌ದುರ್ಗಮದುರ್ಗರೂಪಮ್ ॥ ೭೭ ॥

ಹದಿಮೂರು ವರ್ಷದ ಆ ಹುಡುಗ ಮನೆಯಲ್ಲಿ ಆಗಲೇ ತಂದೆಗಳಿಂದ ಕಾವ್ಯ ಅಮರ ವ್ಯಾಕರಣ-ವೇದ ಇವುಗಳನ್ನು ಅಭ್ಯಾಸಮಾಡಿದ್ದನು. ಆನಂತರ ಮಠದಲ್ಲಿ ಧೀರರೆಂಬ ರಾಜರಿಗೆ ದುರ್ಗಮವಾದ ಕೋಟೆಯಂತಿರುವ ಕರ್ಕಶವಾದ ತರ್ಕಶಾಸ್ತ್ರವನ್ನು ಪಠನ ಮಾಡಿದನು.

ಯಸ್ಯೇಕ್ಷಣೇನ ಶ್ರವಣೇನ ವಾಚಃ
ಸಾನ್ನಿಧ್ಯಮಾತ್ರೇಣ ಬುಧಾ ಭವಂತಿ ॥
ಯತೀಶ್ವರೇಽಸ್ಮಿನ್ ಭವತಿ ಪ್ರಸನ್ನೇ
ಕಿಂ ಶ್ರೀನಿವಾಸೇ ಕಥನೀಯಮಾಸ್ತೇ ॥ ೭೮ ॥

ಯಾರನ್ನು ನೋಡುವುದರಿಂದ, ಯಾರ ಮಾತನ್ನು ಕೇಳುವುದರಿಂದ, ಯಾರ ಸನ್ನಿಧಾನ (ಸಹವಾಸ) ಮಾತ್ರದಿಂದ ಪಂಡಿತರಾಗುತ್ತಾರೋ. ಅಂಥ ಆ ಶ್ರೀ ಸತ್ಯಧ್ಯಾನತೀರ್ಥರೆಂಬ ಯತಿವರ್ಯರು ಪ್ರಸನ್ನರಾಗಿದ್ದಾಗ ಈ ಶ್ರೀನಿವಾಸಾಚಾರ್ಯರ ವಿಷಯದಲ್ಲಿ ಹೇಳುವುದೇನಿದೆ?

ಸಮಜ್ಯಾಯಾಂ ಕೂಲೇ ಕಮಲಕಮಲಿನ್ಯಾಸ್ತಿರುಪತೌ
ಯತಾವುಚ್ಚಸ್ಥಾನೇ ಲಸತಿ ಪರಿತಃ ಪಂಡಿತಕುಲೇ ॥
ಸಮಾಸನ್ನೇ ನಾನಾಜನಪದವಸತ್ಪ್ರೇಕ್ಷಕಜನೇ
ಪರೀಕ್ಷಾರ್ಥೀ ಕಶ್ಚಿದ್ದಿನಕರಕೃತೇರೇನಮನಮತ್ ॥ ೭೯ ॥

